॥ श्रीः ॥

चौखम्बा सुरभारती ग्रन्थमाला
१२०



# जातकमाला-दीपिका

## ( प्रश्नोत्तरात्मिका )

( प्रथमजातकतो दशमजातकान्ता )

लेखकः
आचार्य रामचन्द्रमिश्रः




चौखम्बा सुरभारती प्रकाशन
वाराणसी

॥ श्रीः ॥

चौखम्बा सुरभारती ग्रन्थमाला
१२०

# जातकमाला-दीपिका

( प्रश्नोत्तरात्मिका )

( प्रथमजातकतो दशमजातकान्ता )

लेखकः
आचार्य श्रीरामचन्द्रमिश्रः



चौखम्बा सुरभारती प्रकाशन
वाराणसी

प्रकाशक
चौखम्बा सुरभारती प्रकाशन
( भारतीय संस्कृति एवं साहित्य के प्रकाशक एवं वितरक )
के० ३७/११७, गोपालमन्दिर लेन
पो० बा० नं० ११२९, वाराणसी २२१००१
दूरभाष : ३३३४३१



तृतीय संस्करण १९८८
मूल्य १०-००




अन्य प्राप्तिस्थान
चौखम्बा संस्कृत प्रतिष्ठान
३८ यू. ए., जवाहरनगर, बंगलो रोड
पो० बा० नं० २११३
दिल्ली ११०००७
दूरध्वनि : २३६३९१

*

प्रधान-वितरक
चौखम्बा विद्याभवन
चौक ( बनारस स्टेट बैंक भवन के पीछे )
पो० बा० नं० १०६९, वाराणसी २२१००१
दूरभाष : ३२०४०४

मुद्रक—
श्रीजी मुद्रणालय
वाराणसी

# भूमिका

विदितमेव विद्वद्भिर्यत्संस्कृतसाहित्यमेकं रमणीयमुद्यानमिव विद्योतते इति। अत्र क्वचिद्रामकथाश्रयाणि सरसानि काव्यानि विराजन्ते, क्वचिदपरतः कृष्णवर्णनपराणि काव्यानि सन्ति, अपरतश्च इतिहासमुपजीवन्ति काव्यानि भासन्ते, काल्पनिककथाश्रयाणि च परतः। सर्वेषामपि एतेषां काव्यानामुद्देश्यन्तु विधेयानामसतः पथो निवर्त्तनपूर्वकं सत्पथप्रवर्त्तनमेकमेव।

कथासाहित्यानामपीह संस्कृतवाङ्मये वैरल्यं नास्ति। एतेषां प्रातिस्विकमिदं वैशिष्टयं यदिमानि मनोरञ्जनविधया साधुहितमुपदिशन्ति। कथासरित्-सागरादय एतदेवोद्देश्यमाधारीकृत्य प्राणीयन्त प्रचुरमप्रथन्त च।

अस्यामेव विधायामन्तर्भवति प्रस्तुतं 'जातकमाला' नामकं महाकविना आर्यशूरेण प्रणीतं काव्यमपि।

अत्र हि ग्रन्थे कल्पनाप्रसूतं भगवतो बुद्धस्य बहुतरपूर्वजन्मवृत्तं तथा मनोरमया काव्यत्वमानीय मनोहरत्वं दधत्या धर्मप्रवर्त्तनपरायणतां जात्वप्यजहत्या च शैल्या वर्णितं यथा पाठको मनसा चमत्कृतिजुषाऽधीयानोऽद: कमपि वचसामगोचरमानन्दमनुभवन्नेव दानदयादिशाश्वतधर्मवृत्तौ प्रवर्तितुं सदुपदिश्यतेऽपि।

जातकमालायाः प्रणेतुः परिचयादिकमत्रैव पुस्तके पुरस्तात् प्राप्यमिति न तदर्थमिह पृथक् प्रयत्यते।

अस्या जातकमालाया दशजातकानि प्रथमादीनि परीक्षासु यत्र तत्र निर्धारितानि। तेषां पठनपाठनादिकमपि प्रक्रान्तं परं छात्राः प्रश्नोत्तरीमपेक्षन्ते; यया ते विनैव महान्तमायासं परीक्षासु साफल्यमासादयेयुः।

अत्र प्रस्तुते प्रश्नोत्तरीरूपेण निबद्धे लघुनि पुस्तके अनुभविना अध्यापकेन ते ते प्रश्नाः कल्पिता ये परीक्षायामागन्तुं शक्नुयुः, तेषां च यथोचितमुत्तरं तत्रैव विन्यस्तम्। यावन्तोऽत्र कल्पिता दत्तोत्तराश्च प्रश्नास्ते यदि साधु विद्यार्थिभिरालोचिताः स्युस्तदा कदाचिदितो बाह्यानामपि प्रश्नानामवसरे यथाऽत्र निर्दिश्यमानेनोत्तरप्रदानं तैः सुकरं स्यात्।

आशासे प्रियच्छात्रवर्गोऽनेन परिशीलितेनोपकृतः स्यादिति।

—रामचन्द्रमिश्रः

# प्रश्न-सूची

## समालोचनात्मको भागः

१. जातकमाला शब्दस्य कोऽर्थः । १
२. आर्यशूरस्य कः समयः ? कश्च तस्य परिचयः । १
३. आर्यशूरस्य गद्यशैली समीक्ष्यताम् । २
४. बोधिसत्त्वपदस्य कोऽर्थः ? २
५. व्याघ्रीजातककथा सङ्क्षिप्य लिख्यताम् । ३
६. चक्षुर्दानप्रक्रमे शक्रस्य शिवेश्च मनोभावा वर्ण्यन्ताम् । ३
७. शिबिजातककथा सङ्क्षिप्य लिख्यताम् । ३
८. कुल्माषपिण्डीजातककथा सङ्क्षिप्य लिख्यताम् । ४
९. श्रेष्ठिजातककथा स्वभाषया सङ्क्षिप्य लिख्यताम् । ४
१०. स्वशब्दैः अविषह्यश्रेष्ठिजातककथा लिख्यताम् । ५
११. अविषह्यश्रेष्ठीति नामकरणे हेतुः कः । ६
१२. उद्रशृगालवानरैर्विप्ररूपाय शक्राय किं किमुपहृतम् ? शशेन च किमुपहृतम् ? स्पष्टीकृतमपेक्ष्यते तत्सर्वम् । ६
१३. शशेन समर्पिते स्वकाये शक्रेन किं कृतम् ? यथावत् प्रकाशय । ६
१४. अगस्त्यजातके शक्रेण अगस्त्यः शक्रेण कथं परीक्षितः ? शक्रेणागृहीतश्चागस्त्यः कान् वरान् दातुमन्वमन्यत् ? प्रसङ्गप्रदर्शनेन स्पष्टीकुरुत । ७
१५. कुतः शक्रेण वरं वरीतुमनुरुध्यमानः अगस्त्यो धीरदर्शनश्रवणादि याचितवान् ? पुनर्दर्शनं न दातुं च प्रार्थयत, विशदयत प्रसंगम् । ७
१६. अष्टमे जातके कीदृशी कथेति सङ्क्षिप्य लिख्यताम् । ८
१७. बोधिसत्त्वाय रथन्तराय शक्रकृतं वरदानं वर्णयत । ८
१८. यज्ञजातककथा स्वशब्दैः प्रकाश्यताम् । ९

---

## व्याख्यात्मको भागः

### गद्य-भागः


स कृतसंस्कारक्रमो ........ कलासु आचार्यकं पदमवाप । १०
अथ कदाचित्स महात्मा ........ पर्वतदरीनिकुञ्जाननुविचचार । १३
अथ स राजा दानप्रियत्वात् ....... सुवर्णादिकं तत्तदर्थिभ्यः । २२
सोऽनन्तरातीतां स्वजातिम् ........ गाथाद्वयमिति नियमार्थं बभाषे । ३०
'अथ कदाचित्तस्य ...... गृहमभिजगाम भिक्षार्थी ।' ३६
'अथ तस्य महासत्त्वस्य ........ मात्सर्याय प्रतार्येत ।' ४०
अथ शक्रो देवेन्द्रस्त्याग ....... कुण्डलाद्गात्राच्चैकस्मात् । ४१
यदि तावत्केनचित् ........ एव विद्रुतास्तत्कष्टम् । ४२
कस्मिंश्चिदरण्यायतन ........ बोधिसत्त्वः शशो बभूव । ४५
तिर्यक्स्वभावविमुखाश्च ........ विस्मयनीया बभूवुः । ४६
द्वितीयेऽहनि गगनतल ....... नातिदूरे तेषां विचुक्रोश । ४७
स यथाक्रमं श्रुतिस्मृति ........ परां धनसमृद्धिमवाप । ४९
स हि मृहिजनसंसर्गं ....... आश्रमपदश्रिया संयोजयामास । ५०
दंष्ट्राकरालवदनानि ...... स्वान्येव वपूंषि प्रत्यपद्यन्त । ५५
'तदेत्र क्षतरोहणसमर्थः ...... स्वमावासं प्रतिजगाम ।' ५८
पर्वदिवसेषु पोषधनियम ...... सत्रागाराणि प्रत्यवेक्षते स्म । ६०
व्यतीत्य चाविक्लमम् ........ उन्नादितमरण्यं प्रत्यपद्यत । ६३
तद्यं यमतः प्रभृति वो ........ इत्येतद्वो विदितमस्त्विति । ६७


### श्लोक-भागः

( अकारादिक्रमेण श्लोकानुक्रमः )


अतुल्यगन्धाधिरसौजसं ६६
अथ क्षितीशस्य तमत्युदारं २४
अथ प्रदाने प्रविजृम्भित ४४
अनेन नाथेन सनाथतां गतं १९
अन्तःपुरेऽथ मनुजाधिपतेः २७
अमुष्य तव नागस्य ६१
अमृष्यमाणः स जगद्गतानां ५९
अर्थस्त्रिवर्गस्य विशेषहेतुः ३७
अर्थिप्रशंसावचनप्रलुब्धा ३६
अल्पेच्छभावात्कुहना १२
असंस्तुतानामपि न ५६
अहो दयास्य व्यसनातुरे १८
आचारशुद्ध्या निभृत्ये १२
इष्टार्थसम्पत्तिविमर्श ३९

उदारभावात्करुणागुणाच्च २१
उदीरिता हर्षपरीतमानसैः २८
एतत्स्मरामि कुशलं ३३
एवंविधाहारपरायणानां ५५
कदा नु गात्रैरपि नाम १७
कनकगिरिशिला विशाल ५३
किमत्र वा बह्वभिधाय ६२
ततः स विद्वानपि राज ६१
ततश्चकम्पे सधराधरा २७
तत्याज दृप्तानपि तस्य २९
तत्साधु दानाद्विनियच्छ ३७
तद्यः कश्चिदितः प्रभृत्य ६७
तद्वत्तया तस्य यशः प्रकाशं ५०
तर्षं विनिन्येऽर्थिजनस्तमेत्य २२
तस्य प्रभावातिशयान्नृपस्य ५३
तस्यार्थिभिर्निर्ह्रियमाण ३९
तेनान्नपानविधिना स ५२
तेभ्यः प्रसादमृदुना मनसा ३२
त्यक्तं वतानेन यथा शरीरं ४९
त्यक्तव्यं विवशेन यन्ननु ३४
त्रातुं लोकान्यस्तु जरा ४४
दद्यान्न दद्यादिति तत्र ३५
दानं नाम महानिधानमनुगं ३४
दानादधर्मं च यदूचिवाँ ३७
दानोद्भवः कीर्तिमयः सुगन्धः २२
दित्साप्रहर्षविकसन् ५१
दूरादपश्यन् स्थविरो २४
न क्वचिद् दुर्लभा वृत्तिः ५१
न चात्र चित्रं परदुःख ४५
न सुगतपरिचर्या विद्यते ३०
नायं यत्नः सार्वभौमत्वम् २६
नासौ जुगोपात्मसुखार्थमर्थं ३५
निमन्त्रयामासुरिव द्रुमास्तं ६४
निरात्मके मेदिनि सारहीने १५
निर्दुर्जनान्यनुपभुक्त ६३
निषेव्य मत्तभ्रमरोपगीतं ६२
निसर्गसौम्यस्य वसुन्धरा १९
परानुकम्पाविनयाभिजातात् २८
परीक्षामेक्षणयुगां १४
पुण्यानुभावादथ तस्य ३८
बाल्येऽनुभूतमिव तत्सम ३३
बोधिसत्त्वस्तु तां दृष्ट्वा १४
भवन्ति लोकस्य हि भूय ३९
मां पश्य मद्रि मा पुत्रो ६५
मीनारिभिर्विस्मरणोज्झिता ४८
मैत्रीमयेन प्रशमेन ११
मैत्री तस्य बलं ध्वजाग्र ५४
य एव लोकेषु शरण्य ६६
यथा तथा विनेशुरथा ४१
यदस्ति यस्येप्सितसाधनं ४८
यदेव याच्येत तदेव २५
यद्वत् प्रजानामहितोदयाय ५६
या नाल्पेन तपः २६
युवापि वृद्धोपशमाभिरामः ५९
रथतुरगविचित्रं मत्तनागेन्द्रनीलं ३०
लक्ष्मेव क्षणदाकरस्य ६८
विडम्बनेवाविनयोद्धतानां २०
वितानशोभां दधिरे ६४
विद्युल्लता नृत्तचले घने ४३
विनिग्रहप्रग्रहयोः प्रवृत्तिः ५२

विप्रोषितस्येव सुहृज्जनस्य २२
विभवसमुदयं वा ३४
विषादनं मारमहाचमूनां १७
शक्रस्य शक्रप्रतिमानुशिष्टया २४
श्रद्धापनं यानवराश्रितानां १७
श्रीमन्ति सद्गुणपरिग्रह १०
सत्यां च शक्तौ मम १५
स त्वं विशुद्धनयनोत्पल २५
सन्दर्शनं लोकहितोत्सुका १७
स पीयमानक्षतजः ५७
स ब्रह्मविद् ब्रह्मविदां ११
समाजवद्यंचच विभाति ६५
सम्पत्तिरिव वित्तानाम् ४४
सविद्यमाने सफले शरीरे १५
सुप्तप्रबद्ध इव जातिमनुस्मरामि ३१
सुहृन्मनस्तापकरी ४३
सोऽहं भृतिं परिभवश्रम ३१
स्तन्यतर्षादुपसृतान् १४
स्थाने भक्तिवशेन ५७
स्वचर्माजिनसंवीतः ४६
स्वबुद्धिविस्पन्दसमाहितेन ४३

---

॥ श्रीः ॥

# जातकमाला-दीपिका

## समालोचनात्मको भागः

( १ ) प्रश्नः—जातकमाला शब्दस्य कोऽर्थः ।

**उत्तरम्**—जातकं नाम जन्मवृत्तम् । तस्य माला इव माला सुसज्जितो विन्यासविशेषः । अत्र जातकमालापदेन भगवतो बुद्धस्य प्राग्जन्मजातानि दयादानादिप्रकाशकानि वृत्तानि प्रकाशयतां वृत्तान्तानां संग्रहः कृत इति जातकमाला पदार्थः । जातकशब्दः जायमानार्थकतया ज्योतिषशास्त्रे प्रथते, यथा—केशवीजातकमित्यादौ । तदेवोपजीव्या जातकं जायमानं जन्मान्तरपरिग्रहपरं भगवन्तं बुद्धमयं ग्रन्थकारो वृत्तान्तप्रदर्शनविधया तुष्टाव । सोऽयं जातकमालाशब्दार्थः 'भगवतो बुद्धस्य गुणवर्णने पर्यवसितो बोध्यः ।

( २ ) प्रश्नः—आर्यशूरस्य कः समयः ? कश्च तत्परिचयः ? ।

**उत्तरम्**—आर्यशूरस्य समयसम्बन्धे संस्कृतसाहित्येतिहासकारा न कृतनिश्चयाः । 'श्रेण्यसंस्कृतेतिहास' Classical Sanskrit Literature' नामके ग्रन्थे कृष्णमाचारीमहोदयः आर्यशूरः—अश्वघोषः, आर्यशूरः, मातृचेटश्चेति-त्रीनपि लेखकानेकत्वेन सन्दिग्धे । स आह—एषां त्रयाणामपि लेखकानां नाम्ना यावन्तो ग्रन्थाः प्रथन्ते, यथा—( १ ) चण्डीस्तोत्र, (२) जातकमाला, ( ३ ) शतपञ्चाशत्कस्तोत्र, ( ४ ) एकोत्तरस्तोत्र, ( ५ ) त्रिरत्नमङ्गलस्तोत्र, ( ६ ) त्रिरत्नस्तोत्र, ( ७ ) मिश्रस्तोत्र, ( ८ ) सुगतपञ्चत्रिरत्नस्तोत्र, ( ९ ) बुद्धचरित, ( १० ) सौन्दरनन्द प्रभृतयः । एषां रचयितॄणां काव्यशैली समाना इति एकत्वे संशयः प्ररोहति ।

परन्तु भिद्यन्ते त्रयोऽप्यमी परस्परमिति प्रवादोऽपि प्रथते ।

अस्यां स्थितौ प्रवादमेवानुसृत्य आर्यशूरः अश्वघोषात् मातृचेटाच्च भिन्नः स्वीकर्त्तव्यः ।

अस्य समयः अश्वघोषात् परत एव मन्यते । अतश्च ई० श० प्रथमं शतकं समयत्त्वेन मन्तव्यम् । संस्कृतभाषाया अन्यकविगणवत् अस्यापि कवेः कोऽपि स्फुटः परिचयो नोपलभ्यते, नायं स्वयं स्वग्रन्थे किमपि लिखति, न वा

किमपि परैरुच्यते। केवलं भाषाशैलीप्रभृतिमाधारीकृत्य वक्तुं शक्यते यदयं प्रथमशतके प्रादुरासीत्।

अयं बौद्धः कविः प्राचीनान् बौद्धसाहित्यमात्रप्रचलितान् पोषधादीन् शब्दान् प्रयुञ्जानः स्वीयं बौद्धत्वं ख्यापयति।

एतावतैव परिचयेन समयनिरूपणने चागत्या वयमपि सन्तोष्टुं बाध्याः।

( ३ ) प्रश्नः—आर्यशूरस्य गद्यशैली समीक्ष्यताम्।

उत्तरम्—यस्मिन् समये आर्यशूरः पृथिव्यामवततार, तस्मिन् समये संस्कृत-भाषायां गद्यरचना अल्पीयसी आसीत्। निरुक्ते यास्केन शास्त्रीया गद्यभाषा प्रवर्त्तिताऽऽसीत्, पतञ्जलिनापि व्याकरणभाष्ये शास्त्रीयगद्यशैली प्रवृत्तकल्पा कृतासीत्। निरुक्ते या सरला प्राञ्जला च शैली अदृश्यत, पतञ्जलिना तस्यामपि परिष्कार इव चक्रे, तेन शास्त्रीयगद्ये लौकिकगद्यस्य बीजं निहितम्—'आम्रान् पृष्टः कोविदारान् आचष्टे,' 'एका क्रिया द्व्यर्थंकरीप्रसिद्धा' इत्यादि भाषया तेन गद्यस्य मार्जितं स्वरूपं प्रकटीकृतं, परन्तु काव्यरूपेण किमपि गद्यं नासीत्।

ऐतिहासिकाः कथयन्ति, जातकानि एव गद्यकाव्यस्योद्भवभूमयस्तान्येव व्यवस्थितस्वरूपं सरसं विवक्षितार्थप्रत्यायनक्षमं प्रभूतं प्रपञ्चितं च रूपं निर्धारयन्।

संस्कृतजातकानां प्रणेता आर्यशूरः यत् गद्यस्य स्पष्टं सरलं च प्रकाम-रमणीयं रूपं समुपस्थापितवान्, तदेव पश्चात् प्रसिद्धानां गद्यकाव्यानां कारण-मभूदिति कथनं सत्यादनतिदूरे स्थितं मन्यते।

आर्यशूरस्य गद्यं पद्यवत् सरसं तथापि अकठिनं विवक्षितार्थप्रत्यायन-समर्थतया सशक्तिकं, दृढबन्धतया शैथिल्यास्पृष्टं च दृश्यते।

गद्येऽपि काव्यं स्रष्टुं शक्यत इति या धारणा कवीनां मानसेष्वजायन्त, तत्र कारणं भवतिस्म आर्यशूर इति कथनं प्रमाणयतीतिहासः।

( ४ ) प्रश्नः—बोधिसत्त्वपदस्य कोऽर्थः ?।

उत्तरम्—बोधः ज्ञानमस्ति यस्य तद् बोधि, तच्च सत्त्वं प्राणी बोधिसत्त्व-शब्दार्थः। ज्ञानवान् प्राणीति पर्यवसितार्थः। ज्ञानं अत्र दयादाक्षिण्यादिरूपं विव-क्षितम्। तादृशः प्राणी भगवान् बुद्धः स्वीयजन्मपरम्परायामवर्त्तत इति बोधि-सत्त्वपदेन जातकमालायामार्यसूरेण भगवान् बुद्धो बोधिसत्त्व समाख्यया प्रतिपादितः।

( ५ ) प्रश्नः—व्याघ्रीजातककथा सङ्क्षिप्य लिख्यताम् ।

उत्तरम्—बुद्धः पूर्वजन्मसु अद्भुतानि दयादानादि कर्माणि कृतवानिति । स कदाचिदेकस्मिन् ब्राह्मणकुले जातः । संस्कारेषु कृतेषु स्वल्पकालेनैव सर्वा विद्या अधिगतवान् । तस्य बहवः शिष्या अभवन् । एतेन अध्ययनाध्यापनादिना असन्तुष्यन् स दानदयादिसंसक्तचेताः प्रवज्यां गृहीतवान् । प्रव्रजिते तस्मिन् तदीया शिष्यमण्डली ववृधे । अथ स पृथूभूते शिष्यगणे योगोपयोगिनं गिरिनदी-निकुञ्जं श्रितवान् ।

तत्र सुखविहारपरेण तेन कन्दरायां बुभुक्षिता सद्यः प्रसूता काचन व्याघ्री भोज्यान्तराभावेन स्वबालान् एव भोक्तुं कामयमाना दृष्टा । ततश्चोदित-दयोऽसौ पर्वतशृङ्गात् पतित्वाऽऽत्मानं विपादयामास । तन्मांसमुपलभ्य व्याघ्री बुभुक्षां शमयामास, बालानामेवं प्राणरक्षा जाता ।

तदीयं स्वशरीरप्रदानेन व्याघ्रीप्राणरक्षारूपमद्भुतं कर्म दृष्ट्वा तच्छिष्याः, यक्षाः, गन्धर्वाः, देवाश्च तदस्थियुतायां भूमौ माल्यम्, अम्बरम्, आभरणम्, चान्दनं चूर्णं च ववृषुस्तैः छन्ना च तदस्थिवसुधा प्रकटं रत्नधात्री समजायतेति प्रथमजातककथासङ्क्षेपः

( ६ ) प्रश्नः–चक्षुर्दानप्रक्रमे शक्रस्य शिवेश्च मनोभावा वर्ण्यन्ताम् ।

उत्तरम्—निजं चक्षुर्याचकाय प्रदाय उपचारैः संरूढव्रणस्य शिबिराजस्य पुरस्तादुत्थितः शक्रस्तं स्वमागतमूचे । वरं वृणीष्वेति । स च तमादृत्य प्रोवाच—मम धनं बलं च बहु विद्यते, अन्धभावात्तु चक्षू रोचते मह्यम्, तच्छ्रुत्वा शक्रो विस्मितः । स बहु निर्बन्धं कृतवान्, ततो राजा तमूचे—

याचकैरिमामवस्थां गमितोऽपि यद्यहं मनसा तानाद्रिये, न विमुखी-भवामि, तदा तवप्रसादान्ममैकमक्षि प्ररोहतु । ततश्च तस्यैकमक्षि जातम् । तद्दृष्ट्वा सर्वेषु चकितेषु स पुनरुवाच—

येन याचकेनाहमेकं चक्षुरयाचिषि, तस्मै नयनद्वयं प्रदायापि यद्यहं प्रसन्न एवावर्त्तिषि, तदा मम द्वितीयमपि नयनं प्ररोहतु, ततश्च तदीयं द्वितीयमपि नयनं प्रारोहत् । तदेतदाश्चर्यं कर्म दृष्ट्वा भूरकम्पत, समुद्र उद्वेलतां गतः ।

शक्रश्च साधुवादैस्तमभिनन्दयन् अन्तर्हितः ।

( ७ ) प्रश्नः—शिबिजातककथा संक्षिप्य लिख्यताम् ।

उत्तरम्—भगवान् बोधिसत्त्वः चिरकालाभ्यासात्पुण्यभूमोदये शिबीनां राजाऽभवत् । स वृद्धोपासनासक्तः प्रकृतिमेधावी प्रजाः स्वसुतानिवापुषत् । तस्य

दानप्रवृत्तिं निशम्य सर्वे याचकास्तमुपाययुः । स तानभिलषितदानेन समतोषयत् । तं परीक्षितुं कदाचित् वृद्धान्धब्राह्मणरूपं धृत्वा शक्रः समाजगाम । तं सत्कृत्य राजोवाच, केनार्थ इति ततो ब्राह्मण उवाच, यदि त्वं निजमेकं चक्षुर्मे ददासि, तदाहमपि एकेनाक्ष्णा लोकयात्रां निर्वहेयम्, तवापि लोकयात्राऽबाधिता तिष्ठेत् । तन्निशम्य राजा तस्मै निजे द्वे अपि चक्षुषी उत्कृत्य दत्तवान् । प्रसीदन्मनाः प्रशंसन् राजानं स ब्राह्मणो यथागतं ययौ ।

तत्परीक्षायां साश्चर्यः प्रसन्नश्च शक्रस्तमुपेत्य प्रोवाच—राजन् तवानेन दानकर्मणाऽहं भृशं प्रसन्नोऽस्मि, तद् वरं वृणीष्व ।

राजोवाच—महाराज, यदि भवान् सत्यं मे प्रसन्नः, तदा मे वरं देहि, हं प्रथमं चक्षुर्दातुमुत्सुको मनसापि नानुतापं गतस्तदा ममैकं चक्षुरुद्भवेत् ।

तच्छ्रुत्वा शक्रे प्रसन्ने तस्यैकं चक्षुरुद्भूतम् । पुनरपि वरदानाय अनुरुध्यमानो राजा शक्रमुवाच, यद्यहं निजमेकं चक्षुर्दत्त्वा विनैव द्वितीयाक्षियाचनां द्वितीयमपि नयनं ददानः प्रसादं प्राप्तवान् स्यां तदा मदीयं द्वितीयमपि नयनमुद्भवेत् ।

एवमुक्तवति राजनि तदीयं द्वितीयमपि नयनं प्रोदभवत् ।

अस्यामवस्थायां जगदाश्चर्यमग्नमभूत् । साधुवादैस्तमभ्यर्च्य शक्रोऽन्तरधात्

( ८ ) प्रश्नः—कुल्माषपिण्डीजातककथा संक्षिप्य लिख्यताम् ।

उत्तरम्—बोधिसत्त्वः पूर्वजन्मनि कोशलराजो बभूव । स पूर्वजन्मवृत्तं स्मरति स्म । तेन कदाचित्सर्वेषां समक्षं पूर्वजन्मवृत्तं कथितं यथा—

अहं पूर्वजन्मनि दरिद्रः श्रमजीवीमृतकमन्वेष्टुं प्रस्थितः चतुरः श्रमणान् अपश्यम् । तेभ्यः प्रणम्य किमपि देवान्तरमनवाप्य गृहस्थितां कुल्माषपिण्डीमेव सादरं तेभ्यो दत्तवान् । तस्यैव पुण्यप्रभावेण सम्प्रति सर्वोऽपि विभव इति ।

समीपस्थिता तस्य पत्नी प्रोवाच, सत्यमुच्यते भवता दानमाहात्म्यम्, अहमपि पूर्वजातिं स्मरामि, प्राग्जन्मनि अहं दासी आसम्, मया श्रमणाय भिक्षवे किञ्चिन्मात्रं भक्तमदीयत, तेनैवाहमिहजन्मनि राजमहिषी भवामि, दानं महाफलम् । चौरादिबाधा अत्र नास्ति, निधिरूपेण सदावर्त्तमाने दाने अपश्यं प्रवर्त्तितव्यमिति ।

( ९ ) प्रश्नः—श्रेष्ठिजातककथा स्वभाषया संक्षिप्य लिख्यताम् ।

उत्तरम्—पूर्वजन्मनि बोधिसत्त्वः श्रेष्ठी बभूव । तस्य दानप्रवृत्तिः सदाऽबाधप्रसराऽवर्त्तत । एकदा सूदैः उपस्थापिते सुगन्धवर्णरसान्विते च भोजने प्रवर्त्त-

मान एव स चतुरो याचकान्भोजनार्थिनो द्वारदेशमुपगतानपश्यत्। तान् विलोक्य स निजां भार्यां तेभ्यो भोजनं दातुमादिष्टवान्। सा भोजनमादाय तेभ्यो दातुं चलन्ती यावदायाति द्वारदेशं तावत् श्रेष्ठिनं परीक्षितुं मारः तद्द्वारदेशे भयानकं रौरवं नाम नरकं सृष्टवान्, आकाशवाचा च तमुवाच श्रेष्ठिनम्—अये श्रेष्ठिन्! धर्मनाशकरं दानम्, यतो धने प्रदत्ते त्रिवर्गसाधनं बाध्यते त्रिवर्गे नाशिते कुतो धर्मः? एवं श्रुत्वा तदीया पत्नी मूढा इव द्वारदेशे स्थिता, तां तथाविधां दृष्ट्वाऽऽकाशवाचं च निशम्य श्रेष्ठी चकित एव बहिराजगाम। उवाच च—कामं ममात्र वह्नौ प्राणाविपद्यन्ताम्, परमहमेषां याचकानां मनोरथभङ्गं न करिष्ये, एतदुक्त्वा स स्वयं भोजनमादाय पुरश्चचाल।

तस्मिन् पुरश्चलति नरकं भीषणाग्निज्वाला जटिलं तत्तिरोऽधात्, तत्र च कमलमदृश्यत। तत्पुण्यप्रसादात् सर्वमन्यथैवाजायत।

भिक्षवश्चाकाशदेशं गताः। सर्वमपीदं तत्परीक्षणार्थमेव सृष्टमासीत्। यत्र श्रेष्ठी दाननिष्ठया साधुसाफल्यमवाप्तवान्।

(१०) प्रश्नः—स्वशब्दैः अविषह्यश्रेष्ठिजातककथा लिख्यताम्।

उत्तरम्—पुरा बोधिसत्त्वः अविषह्यश्रेष्ठीति नाम्ना प्रसिद्धः दानदयाविनयादिगुणगणोपेतः श्रेष्ठी बभूव। प्रचुरधनसमृद्ध्या स कुबेर इव प्रत्यभासत। तदीयं दानं कदापि न प्रतिबद्धमभूत्। यथा याचकानां कृते तदीयं दर्शनं प्रियमासीत्तथैव तस्यापि कृते याचकानां दर्शनं प्रियमासीत्।

यदा स दानशीलतया याचकान् सन्तोषयन् अवर्त्तत, तदा तद्दानशीलतया विस्मयमानः शक्रः तत्परीक्षार्थमिव रज्जुकुण्डलं दात्रं चैकं विहाय सर्वमपि तदीयं विभवमन्तर्धापयामास। प्रभातायां रात्रौ समुपजातप्रबोधश्चासौ स्वं भवनं परिजनशून्यं गतविभवं च समीक्ष्यापि केवलमिदमेवोच—

'यदि कश्चन भिक्षां कर्त्तुमजानन् जनो मम धनं नीतवान् तदोचितमेव जातम्, यदि पुनर्मम भाग्यदोषेण कश्चन मदीयां दानकृतामभ्युन्नतिं सोढुमशक्तिः कश्चन मम धनमपहृतवान् तदा मम कृते खेदस्य विषयः।

स्वयमसौ भिक्षाकलाया अज्ञानात् कञ्चन न विभिक्षे, परं दात्रेण काष्ठं तृणादिकं च कर्त्तयित्वा तद्विक्रयलब्धं धनं च याचकाय प्रदाय सन्तुष्ट आसीत् श्रेष्ठी।

तदीयां दानशीलतां दृष्ट्वा विस्मयमानः सादरश्च शक्रो व्योम्नि स्थितस्तमुवाच—गृहपते! अतिदानादेव त्वमिमां दशामुपेतोऽसि, तद्वारय दानप्रवृत्तिं

ततश्च पुनरपि त्वं समृद्धो भविष्यसि । कणशो दीयमानो विपुलोऽपि धनराशिः क्षीयते, सञ्चयेन च वर्धत इति सञ्चये प्रवर्त्तस्व । ततः स शक्रमुवाच—दानं सुखाय, सञ्चयश्च विपत्तौ क्लेशायेति को नु सञ्चये यतेत ?

ततः शक्र उवाच—यस्य प्रभूतं धनं सदत्तां नाम, तवतु सा स्थितिर्नास्ति, तत्सञ्चये वर्त्तस्व । ततश्च श्रेष्ठीतमुवाच, भगवन्, भवान् मामाग्रहेण न बध्नातु, दानमार्गं विहाय सञ्चयमार्गाश्रयणं मम नेष्टम् । ततस्तन्निश्चये प्रसीदन् शक्रस्तस्मै साधुवान्प्रददौ, तमुवाच—मत्कृपया भवदीयं धनं कथापि क्षीणं न भविष्यति, भवानविरतं दानं करोतु । ततोऽसौ पुनः समृद्धिमान् दानप्रवृत्तश्चाजायत ।

( ११ ) प्रश्नः—अविषह्यश्रेष्ठीति नामकरणे हेतुः कः ?

उत्तरम्—पूर्वजन्मनि बोधिसत्त्वः श्रेष्ठी बभूव । दानप्रवृत्त्याऽविरतदानशीलः परोपकाररतश्च स आसीत् । कृपणतया मात्सर्येण च अस्पृश्यमानः अविषह्यः अजेयश्च स इति कृत्वा तस्य अविषह्यः अजेयः श्रेष्ठीति प्रसिद्धिरभूत् । अविषह्यः अजेय आसीदिति तस्य तथा नाम जातम् ।

( १२ ) प्रश्नः—उद्रश्शृगालवानरैर्विप्ररूपाय शक्राय किं किमुपहृतम् ? शशेन च किमुपहृतम् ? स्पष्टीकृतमपेक्ष्यते तत्सर्वम् ।

उत्तरम्—ब्राह्मणवेषधरः मार्गपरिभ्रष्टः पथिक इव शक्रो यदा वने समुपस्थितः, तदा उद्रेण सप्तमत्स्यास्तस्मै भोजनार्थमुपहृताः, 'मीनारिभिर्विस्मरणोज्झिता वा त्रासोत्सुका वा स्थलमभ्युपेताः, खेदप्रसुप्ता इव सप्तमत्स्या लब्धा मयैतान्निवसेह भुक्त्वा' इति तदुक्तिः, तत्रैव च शृगालोक्तिः—

'एका च गोधादधिभाजनं च केनापि संत्यक्तमिहाध्यगच्छम् ।
तन्मे हितावेक्षितयोपभुज्य वनेऽस्तु तेऽस्मिन् गुणवास वासः' ॥

वानरस्तु—'आम्राणि पक्वान्युदकं मनोज्ञं छाया च सत्संगमसौख्यशीता ।
इत्यस्ति मे ब्रह्मविदां वरिष्ठ भुक्त्वैतदत्रैव तवास्तु वासः' ॥

शशस्तु—'यदस्ति यस्येप्सितसाधनं धनं स तन्नियुक्तेऽर्थिसमागमोत्सवे ।
न चास्ति देहादधिकं च मे धनं प्रतीच्छ सर्वस्वमिदं यतो मम' ॥

इत्युक्त्वा शरीरं वह्नौ क्षिप्तवान् ॥

( १३ ) प्रश्नः—शशेन समर्पिते स्वकाये शक्रेण किं कृतम् ? यथावत्प्रकाशय ।

उत्तरम्—शशेन अतिथिसत्काराय शरीरे वह्नौ क्षिप्ते शक्रो नितान्तचकितः प्रसन्नश्च भूत्वा प्रोवाच—

'जातिः क्वेयं तद्विरोधि क्वचेदं त्यागौदार्यं चेतसः पाटवं च ।
विस्पष्टोऽयं पुण्यमन्दादराणां प्रत्यादेशो देवतानां नृणां च" ॥
'अहो बत गुणाभ्यासवासितस्य यथामतिः ।
अहो सद्वृत्तवात्सल्यं क्रियौदार्येण दर्शितम्' ॥

इत्युक्त्वा शक्रः तत्कर्मातिशयख्यापनार्थं लोकहितावेक्षी शशबिम्बलक्षणेन वैजयन्तस्य प्रासादस्य देवसभायाः सुधर्मायाश्च कूटागारकर्णिके चन्द्रमण्डलं चाम्पलञ्चकार ॥

( १४ ) प्रश्नः—अगस्त्यजातके शक्रेण अगस्त्यः कथं परीक्षितः ? शक्रेणागृहीतश्चागस्त्यः कान् वरान् दातुमन्वमन्यत ? प्रसङ्गप्रदर्शनेन स्पष्टीकुरुत ।

उत्तरम्—अगस्त्यजातके विविक्ते पुण्याश्रमे स्थित्वा सदा ध्यानपरायणं दानोन्मुखञ्चागस्त्यं परीक्षितुमेकदा प्रातः कृतनित्यक्रियस्य श्रपिताहारस्य तस्य पुरतोऽतिथिरूपेण शक्र आगतः, अगस्त्यः स्वं भोजनं प्रसन्नतापूर्वकं तस्मै प्रदाय स्वां तृप्तिमनुभवन्निव दिवसं ध्यानेन नीतवान् ।

एवमेव द्वितीयदिने परदिने च परीक्षितोऽगस्त्यो यदा स्वदानाभिमुख्यान्न-व्यरमत्तदा शक्रो वने ग्रीष्ममिव समुपस्थाप्य सर्वाणि तरुगुल्मानि फलशून्यानि च्यवमानपत्राणि च चकार । तस्यामपि स्थितावगस्त्यः अचिरपतितमत एव शुष्यदपि किञ्चिदवशिष्टरसं पत्रजातमादाय श्रपयित्वा तद्रसेनैव जीवनं निरुवाह, एकस्मिन्नहनि शक्राय तमपि पत्ररसं प्रदाय स्वयमुपोषितरातस्थौ । ततः प्रसन्नः शक्रस्तं वरं याचितुमन्वरुणत्, तदाऽगस्त्यो यं वरं ययाचे, स एवम्—

"येनाभिभूतमतिरेति न जातु तृप्ति
लोभानलः सहृदयं मम नाभ्युपेयात्"

अपरं वरं वृणीष्वेत्युक्तः पुनरुक्तवान्—

'येनाभिभूता द्विषतेव सत्त्वाः स द्वेषवह्निर्मम दूरतः स्यात्'

धीरेण सह संभाषणं स्यादिति च तस्य वरयाचनाऽभूत् ।

( १५ ) प्रश्नः—कुतः शक्रेण वरं वरीतुमनुरुध्यमानः अगस्त्यो धीरदर्शनश्रवणादि याचितवान् ? पुनर्दर्शनं न दातुं च प्रार्थयत, विशदयत प्रसङ्गम् ।

उत्तरम्—अतितरां तुष्टः शक्रो यदा द्वित्राणि वरदानानि स्वीकृत्यापि न समतुष्यत्, पुनः-पुनर्वरं याचितुं चाग्रहीतवान् तदाऽगस्त्य उवाच—

न त्वं पुनर्मम दृष्टिपथमुपेया इत्येष वरो दीयताम्। एतया प्रार्थनया चकित इव शक्र उवाच—महात्मन्, जपव्रते ज्याविधिना तपःश्रमैर्जनोऽयमन्विच्छति दर्शनं मम।

भवान् पुनर्नेच्छति कस्य हेतोः? तदुत्तरेऽगस्त्य ऊचे—

"निरीक्ष्यते रूपममानुषाद्भुतं प्रसन्नकान्तिज्वलितं च तेजसा।

भवेत्प्रमादस्तपसीति मे भयं प्रसादसौम्यादपि दर्शनात्तव"॥ इति।

(१६) प्रश्नः—अष्टमे जातके कीदृशी कथेति संक्षिप्य लिख्यताम्।

उत्तरम्—बोधिसत्त्वः पूर्वजन्मनि मैत्रीबलनामको राजा बभूव, स यमनियमधर्मानुरागादिगुणैः पूर्णमानसः सर्वादृतश्चासीत्। तद्रक्षया सर्वेऽपि निर्भया आसन्। गोपाला अपि निर्भया वने गा अचारयन्। एकदा यक्षा वने निर्भयं विचरतो गोपानालोक्य तेषां मुखाद् राज्ञो वृत्तं प्रभावं दयां च निशम्य ब्राह्मणयाचकवेषास्ते राजानमुपागताः।

भोजनकाले समुपागतान् तान्यक्षानालोक्य सत्काराय भोजनं दातुकामं राजानं तेऽकथयन्, वयं नेदृशं भोजनं रोचयामहे, वयं प्रत्यग्रोष्माणि नराणां मांसानि कामयामहे इति।

एवमाग्रहपरायणानां तेषां प्रीतये मैत्रीबलः स्वमेव सद्यः कृत्यमानं मांसं तेभ्य उपहर्त्तुं प्रचक्रमे, छेददुःखं तस्य निश्चयं न प्रतिबद्धवत्। अथ तस्य दानप्रवृत्त्या तुष्टः शक्रः सद्यः क्षतरोहणसमर्था दिव्या ओषधीः प्रयुज्य तं विरूढव्रणमकरोत्, अत एव च तत्रोक्तं—बहुकराः खल्वेते पञ्चका भिक्षवः इति।

(१७) प्रश्नः—बोधिसत्त्वाय रथन्तराय शक्रकृतं वरदानं वर्णयत।

उत्तरम्—विश्वन्तरनाम्नाऽवतीर्णो बोधिसत्त्वो गन्धगजं दत्त्वा कृतापराधः पित्रा प्रकृतिप्रेरणया वनं गमितः। तत्र ब्राह्मणेन याचितो निजौ पुत्रौ दत्तवान्। महासत्त्वतया तस्यामपि स्थितौ निगृहीतमानसो भार्यया समं वने न्यवसत्। तं दानप्रवृत्तिं परीक्षिष्यमाणः शक्रो ब्राह्मणरूपधरस्तं तद्भार्यां ययाचे। स तां ब्राह्मणरूपधराय शक्राय ददौ। ततश्च प्रसन्नः शक्रः तस्मै भार्यां परावर्त्तयामास, उवाच च—

तुभ्यमेव प्रयच्छामि मद्रीं भार्यामिमामहम्।

व्यतीत्य नहि शीतांशुं चन्द्रिका स्थातुमर्हति॥

शक्रादेशेन च कुमारौ याचितवान् ब्राह्मणः बोधिसत्त्वतनयौ शिविविषयमेव प्रापयामास।

अथ शिवयः सञ्जयश्च शिविराजस्तदतिकरुणमतिदुष्करं च विश्वन्तरस्य कर्म श्रुत्वा खिन्नप्रसन्नमनसो ब्राह्मणसमर्पितौ विश्वन्तरकुमारौ प्रसादयामासुः। विश्वन्तरं च सभार्यं वनात्प्रत्यानीय राज्य एव प्रतिष्ठापूर्वकं निवासयामासुः ॥

( १८ ) **प्रश्नः**—यज्ञजातककथा स्वशब्दैः प्रकाश्यताम्।

**उत्तरम्**—पुराकाले बोधिसत्त्वो राजा बभूव। तस्य विषयेऽवृष्टिरजायत, ततोऽमात्यास्तं यज्ञं कर्त्तुमूचुः। पशुहिंसा साध्ये यज्ञे तस्य मनो नारमत। न च तेन मन्त्रिणोऽपि तमाशयं बोधिताः। स प्राचारद् यदद्यप्रभृति यो मम राज्ये अविनयेन अमर्यादया च वर्त्तिष्यते स मया यज्ञपशुत्वेन कल्पिष्यते। तदादेशं सर्वा प्रकृतिरपालयत्। सर्वा प्रकृतिर्धर्मेण विनयेन च प्रावर्त्तत। ततः प्रसन्ना अमात्या प्रजानां वृत्त्या राजानं साधु प्राशसन्। इत्येव कथा दशमे यज्ञजातके लिखिता।

---

## व्याख्यात्मको भागः

### व्याघ्रीजातकम्

( १ ) श्रीमन्ति सद्गुणपरिग्रहमङ्गलानि
कीर्त्यास्पदान्यनवगीतमनोहराणि ।
पूर्वप्रजन्मसु मुनेश्चरिताद्भुतानि
भक्त्या स्वकाव्यकुसुमाञ्जलिनार्चयिष्ये ॥

पद्यमिदं व्याख्यायताम् ।

उत्तरम् — मुनेः = भगवतो बुद्धस्य, श्रीमन्ति = शोभाशालीनि, सद्गुणानां = दयादाक्षिण्यादीनां, परिग्रहेण = स्वीकारेण, मङ्गलानि = कल्याणकराणि, कीर्त्यास्पदानि = यशोजनकानि, अनवगीतमनोहराणि = अनिन्दितानि सुन्दराणि च यानि, पूर्वप्रजन्मसु = प्राचीनेषु तेषु तेषु नानाजन्मसु कार्यग्रहणेषु, चरिताद्भुतानि = विस्मयावहानि वृत्तानि तानि, अहं = ग्रन्थकारः, भक्त्या = श्रद्धया, स्वकाव्यकुसुमाञ्जलिना—काव्यमेव कुसुमाञ्जलिः = अञ्जलौ कृतः पुष्पराशिस्तेन, अर्चयिष्ये = पूजयिष्यामि । भगवतो बुद्धस्य प्राग्जन्मसु तेन तेन रूपेण शरीरग्रहणावसरेषु तेन यावन्ति विस्मयावहानि कर्माणि कृतानि तानि लोकेषु तदीयां कीर्त्तिं विस्तारयन्ति, लोकानां विस्मयं च जनयन्ति, तेनाकृष्यमाणोऽहं श्रद्धावशेन तानि चरितानि संगृह्य स्वां भक्तिमेव प्रकाशयामि, तेषां चरितानां प्रकाशनं तच्चरितपूजायां भविष्यति, मदीया कृतिरियं तच्चरितपूजापर्यवसायिनी, काव्यात्मककृतिरियं भक्तिकुसुमानामेव रूपान्तरमिति तात्पर्यम् । वसन्ततिलकं वृत्तम्—"उक्ता वसन्ततिलका तभजा जगौ गः" इति च तल्लक्षणम् । भक्तिकुसुमाञ्जलिपदे रूपकं स्पष्टम् । अञ्जलिपदं संयुतकरद्वयवाचि । तच्चात्र तद्गतपुष्पपर्यवसायि, न्यायकुसुमाञ्जलिपदादौ यथा ॥

(२) "स कृतसंस्कारक्रमो जातकर्मादिभिरभिवर्द्धमानः प्रकृतिमेधावित्वात् सानाथ्यविशेषाज्ज्ञानकौतूहलादकौसीदयाच्च न चिरेणाष्टादशसु विद्यास्थानेषु स्वकुलक्रमाविरुद्धासु च सकलासु कलासु आचार्यकं पदमवाप" ।

व्याख्यायतामयं सन्दर्भः ।

उत्तरम्—सः = पूर्वजन्मनि ब्राह्मणकुले जातो भगवान् बुद्धः, कृतसंस्कार-

क्रम:=क्रियमाणसंस्कार:, तदेव विशदयति—जातकर्मादीति०—जातकर्मादिभि:= जातकर्म-चौल-मौञ्जीप्रभृतिभिर्गर्भदोषबीजदोषादिदूरीकरणहेतुतया क्रियमाणै: संस्कारविशेषै: तै: तै: संस्कारै:, अभिवर्द्धमान:=वृद्धि भजमान:, प्रकृति-मेधावित्वात्=स्वभावत: तीक्ष्णप्रतिभाशालित्वात्, सनाथस्य भाव: सानाथ्यं= सहायता, तद्विशेषात्=पित्रादिकृतसहायतातिशयात्, कौतूहलं=कुतुकमुत्कण्ठा ततश्च, अकौसीदयात्=आलस्यरहितत्वात् च, न चिरेण=शीघ्रमेव, अष्टादशसु विद्यास्थानेषु=पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिता: विद्या: स्थानानि— धर्मस्य चतुर्दश, आयुर्वेदो धनुर्वेदो गान्धर्वं चार्थशास्त्रकमिति तानि अष्टादश विद्यास्थानानि तेषु, स्वकुलक्रमाविरुद्धासु=वंशपरम्परानुमतासु, सकलासु= समस्तासु, कलासु=गीतनृत्यादिस्वरूपासु, आचार्यकं=नैपुण्यं, तदेव पदं= प्रतिष्ठामवाप=प्रापत् ॥

( ३ ) स ब्रह्मविद् ब्रह्मविदां बभूव राजेव राज्ञां बहुमानपात्रम् ।
साक्षात् सहस्राक्ष इव प्रजानां ज्ञानार्थिनामर्थचर: पितेव" ॥

अयं श्लोको व्याख्यायताम् ।

उत्तरम्—अयं श्लोको जातकमालाया: प्रथमात् व्याघ्रीजातकमालाया: प्रकरणादुद्धृत: । अत्र ब्राह्मणनाम्न: मुख्यपात्रस्य वर्णनं कृतम् ।

ब्रह्मवित्=ब्रह्मज्ञानी, स=ब्राह्मण:, राज्ञां=सर्वेषां नृपाणां, बहुमानपात्रं =सातिशयादरभाजनं, राजा इव, प्रजानां=लोकानां, सहस्राक्ष=इन्द्र इव, ज्ञानार्थिनाम्=ज्ञानं कामयमानाम्, अर्थचर:=अनुकूल: उपकारी पिता इव उपकारी बभूव ।

यथा ब्रह्मज्ञानं कामयमानानां कश्चित् ब्रह्मज्ञानी स्वोपज्ञज्ञानदानेन उपकारं कृत्वा, राज्ञां कश्चन राजा वा उपकारद्वारा समादरभाजनं भवति, लोकानां शक्रश्च आदरणीय: भवति, यथैव वा पिता ज्ञानार्थिनां स्वबालानामुपकारको भवति, तथैव स सर्वेषां ज्ञानप्रद: उपकारी च बभूवेति तात्पर्यम् ।

अत्र मालोपमा नामालङ्कार:, तथा च तल्लक्षणम्—'मालोपमा यदेकस्यो-पमानं बहु दृश्यते' इति । वसन्ततिलकं वृत्तम् ।

( ४ ) मैत्रीमयेन प्रशमेन तस्य विस्यन्दिनेवानुपरीतचित्ता: ।
परस्परद्रोहनिवृत्तभावा: तपस्विवद् व्याडमृगा विचेरु: ॥

अयं श्लोको यथावद् व्याख्यायताम् ।

उत्तरम्—स ब्राह्मणोऽतीव प्रशमनिष्ठ आसीत्तस्याचरणेन न लोका:

केवलं परेऽपि प्राणिनः शान्ति समाजग्मुरिति पद्यस्याशयः । तस्य=ब्राह्मणस्य, मैत्रीमयेन=मित्रताऽनुगतेन, विस्यन्दिना=प्रसरणशीलेन इव, अनुपरीतचित्ताः =आकलितहृदयाः, अत एव च परस्परद्रोहेभ्यः=अन्योऽन्यद्वेषेभ्यः, निवृत्तः= विरतो भावो येषां तथाभूताः, व्याडमृगाः=पशुपक्षिणः, तपस्विवत्=तपस्विन इव परस्परपीडाविमुखाः, विचेरुः=समन्ताद्विहारं चक्रुः । यथा तपस्विनः परस्परं द्वेषान्निवृत्ता विचरन्ति, तथैव तस्य ब्राह्मणस्य मैत्रीमयेन प्रशमेन प्रसरता इव युक्तमानसाः सर्वेऽपि पशुपक्षिणः समन्तात् विचेरुः । मैत्रीनामको भावोऽन्योऽन्यं विश्वासमुत्पादयतीति तदाचरणेन शिक्षितानां सर्वेषां पशुपक्षिणां मानसानि परहिंसाविरतानि समजायन्तेति तात्पर्यम् । योगशास्त्रे प्रसिद्धो मैत्रीनामको भावः—'मैत्री, करुणा, मुदितोपेक्षा नामकाश्चतस्रो योगिनां भावाः, मैत्र्यादिभिश्चेतोऽवस्थाभिः क्लेशप्रहाणद्वारा सालम्बनसमाधिस्ततश्च निरालम्बनसमाधि'रिति यौगिकी प्रक्रिया बोध्या । पूर्वोक्तलक्षणं वसन्ततिलकं वृत्तम् ।

( ५ ) आचारशुद्ध्या निभृतेन्द्रियत्वात् सन्तोषयोगात्करुणागुणाच्च ।
असंस्तुतस्यापि जनस्य लोके सोऽभूत् प्रियस्तस्य यथैव लोकः ॥

व्याख्यायतामयं श्लोकः ।

**उत्तरम्**—अत्र श्लोके व्याघ्रीजातककथागतस्य ब्राह्मणस्य वर्णनं विद्यते । स हि ब्राह्मणः आचारशुद्ध्या=शुद्धेन अकलुषेण आचरणेन, सन्तोषयोगात्= सन्तुष्टतासम्बन्धात्, करुणागुणात्=कारुण्यरूपगुणविशेषशालित्वात्, च असंस्तुतस्य=अपरिचितस्यापि जनस्य, लोके प्रियः=प्रीतिपात्रम् अभूत्, यथैव सः अपरिचितः लोकः तस्य प्रियः अभूत् । शुद्धेन आचरणेन सन्तोषसम्बन्धेन कारुण्यगुणेन च तस्य अपरिचितानामपि लोकानां हृदये प्रीतिरुत्पद्यतेस्म, यथा तस्य हृदये अपरिचितलोकविषयेऽपि प्रीतिरुत्पद्यत । कारुण्यगुणो हि परिचितापरिचितसाधारण्येन प्रीतिं जनयतीति तस्य मनसि सर्वसाधारणी प्रीतिरासीदिति तात्पर्यम् । एवमेव कारुण्यगुणस्य वर्णनं दृश्यते किरातार्जुनीये तृतीयसर्गे— 'प्रसह्य चेतस्सु समासजन्तमसंस्तुतानामपि भावमार्द्रम्' इत्यत्र ।

'संस्तवः स्यात्परिचयः' इत्यमरः । वसन्ततिलकं वृत्तम् । अत्र श्लोके कारुण्यगुणो योगशास्त्रे वर्णितः करुणारूपो बोध्यो येन वैरनिवृत्तिः जायते ॥

( ६ ) अल्पेच्छभावात्कुहनानभिज्ञस्त्यक्तस्पृहो लाभवशः सुखेषु ।
स देवतानामपि मानसानि प्रसादभक्तिप्रवणानि चक्रे ॥

—व्याख्या कार्या ।

उत्तरम्—अल्पेच्छभावात्=इच्छाया नियन्त्रणेन निगृहीतमानसत्वात्, कुहना=बकवृत्तिस्तदनभिज्ञः निर्लोभ इत्यर्थः, लाभे यशसि सुखे च त्यक्तस्पृहः=विरताकाङ्क्षः, स=ब्राह्मणः, देवतानामपि=किं पुनः साधारणलोकानां देवानामपि, मानसानि=चेतांसि, प्रसादे=प्रसन्नतायां मुदितावृत्तौ, भक्तौ च प्रवणानि=उन्मुखानि चक्रे। स तथा नियतमानसो वञ्चकवृत्तिपराङ्मुखश्चासीत्, यथा देवा अपि तं वीक्ष्य स्वभावानुकरणपरायणाः प्रसादे भक्तौ च तद्वदेव प्रवृत्ता अजायन्त का कथा लोकानां तदनुकरणस्येति तात्पर्यम्।

इच्छाया अल्पविषयत्वं यथोपलब्धसामग्रीसन्तोषः, तेन बकवृत्तिनिरोधः, बका हि लोभाधिक्येनैव वञ्चकवृत्तिमाचरन्ति, लोभाभावे स्वत एव तद्वृत्ति व्युपरमः, एवंस्थितौ प्रसादस्य स्वतः समुदयः। तथाचरन्तं तं दृष्ट्वा देवा अपि प्रसादाय भक्तये च स्पृहां चक्रुः, का कथा लोकानामिति भावः।

( ७ ) अथ कदाचित्स महात्मा परिनिष्पन्नभूयिष्ठे पृथूभूते शिष्यगणे प्रतिष्ठापितेऽस्मिन् कल्याणे वर्त्मन्यवतारिते नैष्कर्म्यसत्पथं लोके संवृतेष्विवापायद्वारेषु राजमार्गीकृतेष्विव सुगतिमार्गेषु दृष्टधर्मसुखविहारार्थं तत्कालशिष्येणाजितेनानुगम्यमानो योगानुकूलान् पर्वतदरी निकुञ्जाननुविचचार'।

व्याख्यायतामयं सन्दर्भः।

उत्तरम्—अथ=अनन्तरं, किञ्चित्कालानन्तरम्, स महात्मा=महामनाः, परिनिष्पन्नभूयिष्ठे=भूयस्त्वं गते वर्द्धमाने, अतएव पृथुभूते=बहुलतां गते शिष्यगणे, अस्मिन् कल्याणे=शुभावहे, वर्त्मनि=कर्त्तव्यमार्गे, प्रतिष्ठापिते=प्रतिष्ठां लम्भिते, लोके=संसारजने, नैष्कर्म्यपथम्=अनासक्तभावेन कर्म कर्त्तव्यमिति, मार्गम्=पन्थानम्, अवतारिते=लोकानां मनस्सु निष्कामकर्मभावनायाः सिद्धान्ते स्थिरीकृत इत्यर्थः, अपायद्वारेषु=निरयमार्गेषु, संवृतेषु=मुद्रितेषु, सुगतिमार्गेषु=मोक्षसाधकपथेषु, राजमार्गीकृतेषु=सुखसञ्चारतां गमितेषु, मोक्षसाधककर्त्तव्यप्रचारद्वारा लोकेषु तदुन्मुखीभूतेष्वित्यर्थः। स=ब्राह्मणत्वेन निर्दिष्टः स महात्मा, दृष्टधर्मसुखविहारार्थम्=दृष्टधर्मतया सुखं विहर्त्तुम्, तत्कालशिष्येण=तस्मिन् समये शिष्यभावेन सह स्थितेन, अजितेन=तन्नामकेन, अनुगम्यमानः=सह सञ्चरता, योगानुकूलान्=यौगिकसाधनायोग्यान्, पर्वतदरीनिकुञ्जान्=पर्वतकन्दरास्थितान् लतागुल्माच्छादितान् भूभागान्, अनुविचचार=विजहार।

यदा तस्य शिष्या बहवः सञ्जाताः, यदा च तेन कल्याणमार्गः प्रचारितः, यदा च तेन लोकानां चित्तेषु निष्कामकर्मभावना निष्ठापिता, पतनमार्गस्य पन्थानश्च निराकृतास्तेन, मोक्षमार्गश्च यदा तेन सुखसञ्चारतां गमितास्तदा तेन कदाचित् अजितनामवता स्वशिष्येण सह योगक्रियायै उपयुक्तेषु गिरिनदी-निकुञ्जेषु भ्रमणं कृतमिति प्रघट्टकार्थः ।

( ८ ) निम्नलिखित श्लोकत्रयं व्याख्यायताम्—

( क ) 'परीक्षामेक्षणयुगां क्षुधा छाततरोदरीम्
आहारमिव पश्यन्तीं बालान्स्वतनयानपि ।।'

( ख ) 'स्तन्यतर्षादुपसृतान् मातृविस्रम्भनिर्व्यथान् ।
रोरुयितरवैः क्रूरैर्भर्त्सयन्तीं परानिव' ।।

( ग ) 'बोधिसत्त्वस्तु तां दृष्ट्वा धीरोऽपि करुणावशात् ।
चकम्पे परदुःखेन महीकम्पादिवाद्रिराट् ।।'

उत्तरम्—( क ) बोधिसत्त्वो निजपूर्वजन्मनि ब्राह्मणो ब्रह्मज्ञानी च भूत्वा योगोपयोगिनि पर्वतकुञ्जे भ्रमन् काञ्चन सद्यः प्रसूतां व्याघ्रीं बुभुक्षया पीडितां ददर्शेति प्रसङ्गे तद्वर्णनपरपद्येष्वन्यतममिदं पद्यम् । सर्वं ददर्शेति क्रियया द्वितीयान्तं कर्मतया सम्बध्यते । एतच्च पद्यत्रयसाधारणम् ।

परिक्षामं=दर्शनक्रियायामपि अशक्तम्, ईक्षणयुगं=नयनद्वयं यस्यास्तथाभूताम्, क्षुधा=बुभुक्षया, छाततरम्=अतिसङ्कुचितम्, उदरं यस्यास्तादृशीम्, बालान्=सद्यो जाततया अल्पवयसः अपि, स्वतनयान्=स्वात्मजान्, आहारमिव=भोज्यमिव, पश्यन्तीम्=निरीक्षमाणाम् । व्याघ्रीं ददर्शेति परेणान्वयः । गिरिकुञ्जे भ्रमन् ब्राह्मणो बोधिसत्त्वः सद्यः प्रसूततया सत्त्वापगमेन म्लाननयनां बुभुक्षाकृशवपुषं पुरःस्थितान् बालान् आत्मजानेव भोक्तुमीहमानामत एव तेषु आहारबुद्ध्या दृशं निक्षिपन्तीं च काञ्चन व्याघ्रीं ददर्शेति भावः । बुभुक्षितः किं न करोति पापमिति प्राचीनोक्त्या स्वतनयेषु तस्या आहारबुद्धिर्जाता । स्पष्टमन्यत् ।

( ख ) प्रसङ्गः 'क' श्लोकवत् ।

स्तन्यस्य=मातृपयसः, तर्षात्=तृष्णावशात्, पिपासयेति यावत्, उपसृतान्=समीपागतान्, मातरि=स्वजनन्यां, यो विस्रम्भः=विश्वासः, अपीडकत्वबुद्धिः, तेन निर्व्यथान् इयं मां क्लेशयिष्यतीति शङ्कया रहितान् ( अपि स्वतनयान् ),

परान्=अन्यदीयान् इव, क्रूरैः=निर्ममैरत एव भयङ्करैः, रोरुयितरवैः= हुङ्कारशब्दैः, भर्त्सयन्तीम्=भीषयन्तीमिव, परानिव स्वतनयानपि पीडयन्तीम् । ददर्शेति क्रियायाः कर्म । यद्यपि ते बालास्तां मातरं स्तन्यपानेच्छयोपसर्पन्ति, तेषां मनांसि च मातृत्वविश्वासेनाशङ्कानि तथापि सा व्याघ्री तेषु आहार-बुद्धिं धारयन्ती तान् भीषणैः स्वशब्दैर्भीषयतिस्मेति जठरज्वालाविजृम्भितम् ।

( ग ) अत्रापि प्रसङ्गः 'क' श्लोकवत् ।

धीरः=स्वभावगभीरः अपि, बोधिसत्त्वः=प्राग्जन्मनि ब्राह्मणरूपः, करुणावशात्=स्वाभाविकदयोद्रेकात्, परदुःखेन=अन्येषां बालानां व्याघ्राणां कष्टेन, प्राणात्ययभयेन, महीकम्पात्=भूकम्पात्, अद्रिराट्=पर्वतराज इव, चकम्पे=अवेपत ।

गभीराशयस्यापि तस्य ब्राह्मणस्य तेषां बालानां प्राणसंशयेन क्लेशं दृष्ट्वा कम्पः समजनि यथा प्रकृतिप्रकोपे जायमाने भुवः कम्पे पर्वतः कम्पते । स्पष्टा उपमा । शेषं सुगमम् ।

( ९ ) ( क ) 'सविद्यमाने सकले शरीरे
कस्मात्परस्मान्मृगयामि मांसम् ।
यादृच्छिकी तस्य हि लाभसंपत्
कार्यात्ययः स्याच्च यथा ममायम् ॥'

( ख ) 'निरात्मके भेदिनि सारहीने
दुःखे कृतघ्ने सतताशुचौ च ।
देहे परस्मायुपयुज्यमाने
न प्रीतिमान् यो न विचक्षणः सः ॥'

( ग ) सत्यां च शक्तौ मम यद्युपेक्षा
स्यादाततायिन्यपि दुःखमग्ने ।
कृत्वेव पापं मम तेन चित्तं
दह्येत कक्षं महताग्निनेव ॥

—श्लोकत्रयं व्याख्यायताम्

( क ) बालान् निजतनयानेव बुभुक्षया भोक्तुमुद्यतां व्याघ्रीं पश्यतो ब्राह्मण-रूपस्य बोधिसत्त्वस्य मनोदशाया वर्णनमिदम् ।

सकले=समस्ते, शरीरे=निजदेहे, संविद्यमाने=वर्तमाने, कस्मात् कारणात् परस्मात्=अन्यस्मात्, मांसं=व्याघ्रीभोजनापेक्षितं पिशितं, मृगयामि=

अन्वेषयामि। तस्य=परकीयमांसस्य, लाभसम्पत्=प्राप्तिसम्भावना, यादृच्छिकी =तदिच्छाधीनतया संशयारूढा, अयं मम कार्यात्ययः=कार्यविघ्नश्च स्यात्। अयमाशयः—व्याघ्रीभोजनमपेक्षितं यतः सा प्रसवक्लेशेन नितान्तबुभुक्षिता स्वबालानेव जिघत्सति, तत्प्राणरक्षार्थं बालानां ततो रक्षार्थं च मांसमपेक्षितं, स्थितावस्या परकीयमांसेनापि कार्यं चलति, परन्तु स्वमांसे वर्तमाने परमांसान्वेषणं व्यर्थम्। यदि स्वरक्षार्थं परमांसमन्विष्यते तदापि तत्प्राप्तिर्निश्चिता नास्ति, एवं परमांसान्वेषणे विलम्बसम्भवेन व्याघ्रीप्राणरक्षारूपं कार्यं नश्यति, अतः स्वशरीरसमर्पणमेव प्राप्तकालमिति सारांशः। वसन्ततिलकं वृत्तम्।

(ख) निरात्मके=आत्मरूपसाररहिते (बौद्धानां नये शरीरस्यैव आत्मतया तद्भिन्नं किमपि आत्मरूपं वस्तु नास्तीति मत्त्वेत्यमुक्तिः), भेदिनि=नश्वरे असारे, सारहीने=निस्तत्त्वके, दुःखे=दुःखकारणे, कृतघ्ने=अकृतज्ञे, सतताशुचौ=मलमूत्राधिष्ठानतया सदाऽपवित्रे च, देहे=स्वतनौ, परस्मै=परकार्याय उपयुज्यमाने, यः=जनः, प्रीतिमान्=प्रसन्नः न, स=जनः, विचक्षणः=पण्डितो न, मूर्खं इत्यर्थः।

स्वं शरीरमसारभूतं सकलक्लेशनिदानं सेव्यमानमपि नश्वरमिति कृतज्ञतावर्जितं नित्यापवित्रं च, तेन च यदि परस्य कश्चन उपयोगो जायते तदा तदुपयुज्य यस्य प्रसादो न जायते स जनो न विज्ञः, उपस्थिता च ममाग्रे सा स्थितिः, अतो मया परमांसान्वेषणं विहाय स्वशरीरमेव समर्पणीयमन्यथाहमपि मूर्खतया गणितः स्यामिति तात्पर्यम्। स्पष्टमन्यत्।

(ग) प्रसङ्गः 'क' वदेव।

शक्तौ=स्वशरीरसमर्पणद्वारा परदुःखापनोदनस्य सामर्थ्ये, सत्यां=विद्यमानायां, यदि मम दुःखमग्ने=बुभुक्षापीडितेऽस्मिन्, आततायिनि=परपीडकतया प्रसिद्धे व्याघ्रीरूपेऽपि दुःखमग्ने सति, यदि उपेक्षा=विमुखता स्यात्तदा, तेन=उपेक्षारूपेण स्वव्यापारेण, मम चित्तं पापं कृत्वा इव=अकार्यं कृत्वेव, तेन दह्येत=दाहमनुभवेत्, महता अग्निना कक्षमिव=शुष्कतृणराशिरिव।

अयमाशयः—अस्मिन् आततायिनि अपि व्याघ्रीरूपे सत्त्वे स्वशरीरार्पणद्वारा दुःखात् वारयितुं शक्ये यद्यहमुपेक्षां करोमि, तदाऽनया उपेक्षया पापं कृत्वेव मम मनो दह्येत, यथा महता सुदीप्तेन वह्निना कक्षं दह्यते तद्वत्। अतः स्वशरीरं दत्त्वा मया स्वमनोदाहोऽवश्यं निवारणीयः अन्यथा पापमिव कृतं स्यात्, अकार्यं च तत्। इति।

( १० ) निम्नलिखिताः श्लोका व्याख्यायन्ताम्—

( क ) 'सन्दर्शनं लोकहितोत्सुकानामुत्तेजनं मन्दपराक्रमाणाम् ।
संहर्षणं त्यागविशारदानामाकर्षणं सज्जनमानसानाम् ॥'

( ख ) 'विषादनं मारमहाचमूनां प्रसादनं बुद्धगुणप्रियाणाम् ।
व्रीडोदयं स्वार्थपरायणानां मात्सर्यलोभोपहतात्मनां च ॥'

( ग ) 'श्रद्धापनं यानवराश्रितानां विस्मापनं त्यागकृतस्मयानाम् ।
विशोधनं स्वर्गमहापथस्य त्यागप्रियाणामनुमोदि नृणाम् ॥'

( घ ) कदा नु गात्रैरपि नामकुर्यां हितं परेषामिति यश्च मेऽभूत् ।
मनोरथस्तत् सफलीक्रियां च सम्बोधिमग्र्यामपि चाविदूरे ॥

एषां श्लोकानां सुबोधा व्याख्या क्रियताम् ।

उत्तरम्—( क )—पूर्वजन्मनि ब्राह्मणरूपस्य बोधिसत्त्वस्य बुभुक्षिताया व्याघ्र्याः दुःखनिवृत्तये स्वशरीरदानाध्यवसायकालिकी मनोदशाऽत्र कविना वर्णिता ।

लोकहितोत्सुकानां=लोकोपकारपरायणानाम्, सन्दर्शनं=मार्गदर्शनम्, मन्दपराक्रमाणाम्=आलस्यपराहतानाम्, उत्तेजनम्=पराक्रमप्रदर्शनाय उत्तेजनाजनकम्, त्यागविशारदानाम्=त्यागशीलानाम्—परार्थं ये त्यागं कुर्वन्ति—तेषाम्, संहर्षणम्=आनन्दजनकम्, स्वसमानशीलजनान्तरदर्शनेन पुरुषा आनन्दमनुभवन्तीति मनसि कृत्येत्थमुक्तम् । सज्जनमानसानाम्=सत्पुरुषचेतसाम्, आकर्षणम्=स्वविहितपरोपकारसदृशकार्यविधानाय तत्परतापादनमत्राकर्षणं बोध्यम् । कदा नु कुर्यामिति वक्ष्यमाणक्रियया सम्बन्धे वाक्यपूर्त्तिः ।

परोपकाराय स्वशरीरं समर्पयितुमुद्युक्तो ब्राह्मणो मनसि कामपि त्वरामिवानुभवन् कदान्वहं स्वशरीरं दत्त्वा व्याघ्रीमुपकृत्य लोकहिताय मार्गदर्शनं, सालस्यानामुत्प्रेरणं, त्यागिनामानन्दं, सज्जनानामाकर्षणं च करिष्यामीति भावना द्योत्यते ।

( ख ) अत्रापि प्रसङ्गः 'क' श्लोकवत् ।

( कदा नु अहम् ) मारमहाचमूनां=कामसेनानाम्, विषादनम्=निराशभावोत्पादनम्, बुद्धगुणप्रियाणाम्=बुद्धभक्तानां, प्रसादनं=प्रीतिजननम्, स्वार्थपरायणानां=स्वार्थभावनोपहतचेतसां, व्रीडोदयम्=लज्जाजननम्, मात्सर्यलोभोपहतात्मनाम्—मात्सर्येण=अन्यशुभद्वेषेण, लोभेन=अनुचितलाभेच्छया

च, उपहत आत्मा येषां तेषाम् च व्रीडोदयम् ( अहं स्वशरीरं दत्त्वा परोपकारेण कदा नु करिष्यामीति भाव: )।

अनेन मम शरीरदानद्वारा परोपकारकरणेन कामसेना ( या सर्वत्र विजयते सा ) हताशतां यास्यति, बुद्धभक्ता: प्रसादं प्राप्स्यन्ति, स्वार्थपरा मात्सर्यलोभोपहताश्च लज्जिष्यन्ते, तदिदं मम शरीरदानं कदा नु सम्पत्स्यते ? त्वरणीयमत्र मयेति भाव: ।

( ग ) 'क'वत् पूर्वोक्त एव प्रसङ्ग: ।

यानवरम्=बुद्धप्रवर्त्तितं महायानमाश्रितानाम्, श्रद्धापनम्=श्रद्धाजननम्, त्यागकृतस्मयानाम्=त्यागे हसताम्, विस्मापनम्=आश्चर्यकरम्, स्वर्गमहापथस्य=स्वर्गप्राप्तिमार्गस्य, विशोधनं=संस्कारम्, त्यागप्रियाणाम्=त्यागपरायणानाम्, नृणाम् अनुमोदि=समर्थनकरम् ( इदं शरीरदानात्मकं कार्यं कृत्वाऽहं महायानमाश्रिता: श्रद्धया योजयिष्यन्ते, त्यागे हसन्तो विस्मयं प्रापयिष्यन्ते, स्वर्गमार्ग: संस्करिष्यते, त्यागप्रियाश्च अनुमोदयिष्यन्ते, तदिदं सर्वप्रियं मम कार्यं कदा नु सम्पत्स्यते ? इति मनोभावोऽत्र वर्ण्यमानो बोध्य: ।

( घ ) ब्राह्मणस्य परोपकाराय शरीरं दित्सतो मनोभावोऽत्र वर्णित: ।

गात्रै:=स्वशरीरावयवै: अपि ( दीयमानै: ), कदा नु परेषां=खिद्यमानानाम्, हितम्=अभिलषितं, कुर्याम्=विदध्याम् ? इति=एतादृश:, यो मनोरथ:=अभिलाष:, मे=मम, मनसि अभूत्=सञ्जात:, कदा नु तत्सफलीक्रियाम्=तस्य मनोरथस्य पूर्त्तिम्, अविदूरे=निकटभविष्यत्काले, अग्र्यच सम्बोधिम्=सम्यक् सम्बुद्धत्वं च, कदा नु कुर्याम्=सम्पादयेयम् ।

स्वशरीरदानद्वारा परहितं कुर्यामिति निजं मनोरथं कदा नु सफलीकरिष्यामि, तेनैवाचिरेण सम्यक्सम्बुद्धत्वमासादयिष्यामीति उत्कण्ठाऽत्र वर्णित बोध्या ।

एतावता प्रसङ्गेन ब्राह्मणस्य दानशौण्डत्वं प्रकाशितम् । स्पष्टमन्यत् ।

( ११ ) निम्नलिखिता: श्लोका व्याख्यायन्ताम् ।

( क ) 'अहो दयास्य व्यसनातुरेजने
स्वसौख्य नै:सङ्ग्यमहो महात्मन: ।
अहो प्रकर्षं गमिता स्थिति: सतामहो
परेषां मृदिता यश:श्रिय:' ॥

साधारणं, चक्षुः प्राप्तम् । अयमाशयः—अभ्युदयस्य लाभाय जीवदयाविनय-सह कृतं दानमेव सर्वोत्कृष्टं साधनं विद्यते, पश्यत तत्प्रत्यक्षं यूयं यदहं मानुषं चक्षुःप्रदाय तत्प्रदानप्रभावेण दिव्यं चक्षुः प्राप्तवानस्मि, प्रत्यक्षमुदाहरणं दृष्ट्वा दानस्य निःश्रेयससाधनतां प्रति युष्माभिरङ्गमानसैर्भवितव्यमिति ।

## कुल्माषपिण्डीजातकम्

(२७) (क) तत्याज दृप्तानपि तस्य शत्रून् रक्तेव रेमे तदुपाश्रितेषु ।
इत्यास तस्यान्यधराधिपेषु कोपप्रसादानुविधायिनी श्रीः ॥

(ख) धर्मात्मकत्वान्न च नाम तस्य परोपतापाशिवमास चेतः ।
भृत्यानुरागस्तु तथा जजृम्भे द्विषत्सु लक्ष्मीर्न यथास्य रेमे ।

व्याख्यया प्रकाश्यतामनयोस्तात्पर्यम् ।

**उत्तरम्**—( क ) बोधिसत्त्वः पूर्वजन्मनि कोशलाधिपतिरभूत् । तस्यैव वर्णनपरं पद्यमिदम् ।

श्रीः=लक्ष्मीः, दृप्तान्=सगर्वान् अपि, तस्य=राज्ञः कोशलाधिपतेः, शत्रून्=रिपून्, तत्याज=त्यक्तवती, तदुपाश्रितेषु=कोशलपतेराज्ञावशंवदेषु, रक्ता=अनुरागवती इव, रेमे=रमते स्म । इति=एवंप्रकारेण ( श्रीः ), अन्यधराधिपेषु=अन्येषु राजसु, तस्य=शिविराजस्य, कोपप्रसादानुविधायिनी—कोपस्य=क्रोधस्य, प्रसादस्य=प्रसन्नतायाश्च, अनुविधायिनी=अनुगामिनी, आस=बभूव । अयमाशयः—राजा शिविः यस्मै कुप्यति लक्ष्मीः तं त्यजति, यत्र च प्रसीदति तत्रानुरज्यति ( एवं ज्ञायते ) यत् लक्ष्मीः राज्ञः कोपस्य चानुगमनं करोति, अर्थात् तदीयं कोपं प्रसादं चानुगच्छति । एवं प्रभावातिशयो ध्वनितः ।

( ख ) तस्य=शिविराजस्य, चेतः=मनः, धर्मात्मकत्वात्=धर्मशील-त्वात्, परोपतापाशिवम्=परपीडाकलुषितम्, परोद्वेगजननकृतदोषदूषितम्, न आस=न बभूव । भृत्यानुरागः=भृत्यविषयः प्रेमा, तथा जजृम्भे=अवर्धत, यथा द्विषत्सु=शत्रुषु, लक्ष्मीः न रेमे=नारमत । भृत्येषु तस्य तथा प्रेमावर्त्तत, यथा तदीयैः प्रयासैः लक्ष्मीः शत्रून् नैव आश्रयत् । अत्रापि पूर्वोक्त एव प्रभावा-तिशयध्वनिः ।

( २८ ) सोऽनन्तरातीतां स्वजातिमनुसस्मार । तदनुस्मरणाच्च समुपजातसंवेगो विशेषवत्तरं श्रमणब्राह्मणकृपणवनीयकेभ्यः सुखहेतु-प्रदानं दानमदाच्छीलसंवरमनवरतं पुपोष पोषधनियमं च पर्वदिवसेषु समाददे । अभीक्ष्णं च राजा पर्षदि स्वस्मिंश्चान्तःपुरे पुण्यप्रभावोद्-

भावनाल्लोकं श्रेयसि नियोक्तुकामः प्रतीतहृदयो गाथाद्वयमिति निय-
तार्थं बभाषे ॥

व्याख्यया सनाथ्यतामुपरितनः सन्दर्भः ।

उत्तरम्—शिविराजवृत्ते तद्वर्णने गद्यांशोऽयं भागः । स=शिविराजः
अनन्तरातीतां=पूर्ववृत्ताम्, स्वजातिं=स्वजन्म, स्वीयं पूर्वजन्मवृत्तम्, अनु
सस्मार=स्मरतिस्म । तदनुस्मरणात्=पूर्वजन्मवृत्तस्मरणहेतोः, समुपजातसंवेग
=जायमानप्रबोधः, विशेषवत्तरं=सविशेषं, श्रमणाः=सन्न्यासिनः, ब्राह्मणाः
द्विजाः, कृपणाः=दरिद्राश्च, त एव वनीयकाः=याचकास्तेभ्यः, सुखहेतु
निदानम्=सुखसाधनम्, दानमदात् । शीलसंवरम्=बौद्धधर्मप्रसिद्धमाचार
विशेषम्, अनवरतं पुपोष=सततमपालयत् । पोषधनियमं=पर्वदिवसे क्रिय
माणस्योपवासनियमस्य पालनम्, अनवरतम्=सदा पुपोष । अभीक्ष्णं=सदा
राजा=शिविराजः, पर्षदि=राजसभायां, स्वस्मिन्=निजे, अन्तःपुरे=रा
गृहे, पुण्यप्रभावोद्भावनात्—पुण्यस्य=धर्मविहितकार्यस्य, यः प्रभावो=महिम
तस्य उद्भावनात्=प्रकटीकरणात्, लोकं श्रेयसि=कल्याणे, नियोक्तुकामः=
प्रेरयन्, प्रतीतहृदयः=विश्वस्तचित्तः, गाथाद्वयम्=अग्रे वक्ष्यमाणं धर्म्यं श्लो
द्वितयं, नियतार्थम्=निश्चितप्रयोजनकम्, बभाषे=उच्चारयामास । पूर्वजन्मस्मृ
जायमानप्रबोधः स राजा श्रमणेभ्यः द्विजेभ्यो दरिद्रेभ्यश्च याचकेभ्यो दानं द
स्म, दानं हि सुखहेतुः । पर्वदिवसेषूपवासमरक्षत्, सभासु अन्तःपुरेषु च पु
महिमानं बोधयन् लोकान् शुभकर्मणि प्रेरयामास, तत्प्रेरकं च गाथाद्वय
निर्दिश्यमानमाहस्म । राज्ञः सततधार्मिकत्वं पुण्यकार्य-प्रवर्त्तकत्वं चात्र निर्दि
मानं बोध्यम् ॥

(२९) (क) न सुगतपरिचर्या विद्यते स्वल्पिकापि
प्रतनुफलविभूतिर्यच्छ्रुतं केवलं प्राक् ।
तदिदमलवणायाः शुष्करूक्षारुणायाः
फलविभवमहत्त्वं पश्य कुल्माषपिण्ड्याः ॥

(ख) रथतुरगविचित्रं मत्तनागेन्द्रनीलं
बलमकृशमिदं मे मेदिनी केवला च ।
बहुधनमनुरक्ता श्रीरुदाराश्च दाराः
फलसमुदयशोभां पश्य कुल्माषपिण्ड्याः ॥

इदं गाथाद्वयं स्पष्टीकुरुत व्याख्यया ।

( ख ) उदारभावात्करुणागुणाच्च
वित्ताधिपत्याच्च स राजवर्यः ।
रेमेऽर्थिनामीप्सितसिद्धिहर्षा-
दक्लिष्टशोभानि मुखानि पश्यन् ॥

व्याख्या कार्या ।

उत्तरम्—( क ) पूर्वजन्मनि कदाचिद् बोधिसत्त्वः शिवीनां राजा भूत्वा जन्म गृहीतवान् । तस्यैव वर्णने पद्यमिदम् ।

सा=शिविराजस्य लक्ष्मीस्तत्र=शिविराजे, यथार्थनामा=लक्षणान् भासनात् लक्ष्मीरिति निरुक्त्या अन्वर्थसंज्ञा, प्रकाशजननी बभूव, या लक्ष्मीः, अविनयोद्धतानाम्=अविनीतानाम्, दुर्मेधसाम्=कुबुद्धीनाम्, अतिकष्टा=महाकष्टदा, आपत्=विपत्तिरिव ( मन्यते ), अल्पात्मनाम्=अल्पसत्त्वानां, या मदिरा=मद्यमिव मादिनी ( मन्यते ) ।

अयमाशयः—यां लक्ष्मीमवाप्य अविनया लोका अकार्यकरणात् आपदि पतन्ति, अल्पसत्त्वाश्च माद्यन्ति, सैव लक्ष्मीः तस्मिन् राजनि शिविराजे सङ्क्रान्ता सती भासनात् अन्वर्थसंज्ञा समजायतेति । राजान्तरव्यतिरेकप्रकाशनद्वारा तस्य शिविराजस्य महासत्त्वता विनीतता च बोध्यते ।

वंशस्थं वृत्तम्—'जतौ तु वंशस्थमुदीरितं जरौ' इति च तल्लक्षणम् ।

( ख ) पूर्वोक्त एव प्रसङ्गः ।

स राजवर्यः=राजश्रेष्ठः शिविराजः, उदारभावात्=दातृत्वगुणोपेतत्वात्, करुणागुणात्=कारुण्यगुणयोगित्वात्, वित्ताधिपत्यात्=प्रचुरसमृद्धिशालित्वाच्च, अर्थिनाम्=याचकानाम्, ईप्सितसिद्धौ=यथेप्सितवस्तुप्राप्तौ, यो हर्षः=आनन्दः, तस्मात् अक्लिष्टलोमानि=हर्षरोमाञ्चितानि, मुखानि पश्यन् रेमे=प्रससाद ।

अयमाशयः—स शिविराजः उदारः कारुण्ययुतः प्रभूतसम्पत्तिश्चासीदिति तद्याचका यथेप्सितं लभमानः प्रसादरोमाञ्चिताश्चाभवन्, तेषां प्रसन्नानि मुखानि दृष्ट्वा च तस्य राज्ञोऽपि महान् आनन्दो भवति स्मेति ।

पूर्वोक्तमेव वृत्तम् ।

( १४ ) 'अथ स राजा दानप्रियत्वात्समन्ततो नगरस्य सर्वोपकरण-समृद्धा दानशालाः कारयित्वा स्वमाहात्म्यानुरूपं यथाभिप्रायसम्पादितं तोपचारं मनोहरमनतिक्रान्तकालसुभगं दानवर्षं कृतयुगमेघ इव ववर्ष ।

अन्नमन्नार्थिभ्यः पानं पानार्थिभ्यः शयनासनवसनभोजन-गन्धमाल्यरजत-सुवर्णादिकं तत्तदर्थिभ्यः' ।

व्याख्यायतां सप्रसङ्गमयं सन्दर्भः ।

उत्तरम्—शिविराजो महादानी प्रभूतवित्तश्चाभवत् इति पूर्वश्लोके उक्तमर्थमेव प्रपञ्चयति गद्यभागेनानेन—

स राजा=शिविराजः, दानप्रियत्वात्=अत्यर्थंदानशीलत्वात्, नगरस्य=स्वपुरस्य, समन्ततः=सर्वेषु भागेषु, सर्वोपकरणसमृद्ध्या=सर्वप्रकारकदेय-वस्तुसज्जीकरणद्वारा, दानशालाः=दानगृहाणि, कारयित्वा=निर्माप्य, स्वमाहात्म्यानुरूपं=स्ववैभवानुकूलं, यथाभिप्रायसम्पादितं=यथारुचिनिर्मितं, सोपचारं=ससत्कारं, मनोहरं=मनोऽनुरूपं च, अनतिक्रान्तकालसुभगं=यथावसरतया मनोहरं, दानवर्षम्=दानवृष्टिं, कृतयुगमेघः=सत्ययुगघन इव ववर्ष । यथा सत्ययुगमेघः समुचितसमये यथोपयोगं वृष्टिं चक्रे तथैवायमपि यथोपयोगं वसु वस्तु च समये याचकेभ्यो ददाविति भावः ।

यथोपयोगं शिविराजो याचकेभ्यो देयं ददावित्युक्तं तदेव प्रपञ्चयति—अन्नमिति—अन्नार्थिभ्यः=अन्नं याचमानेभ्यः, अन्नम्, शयनम्=शय्याम्, आसनम्=उपवेशनम्, भोजनम्, गन्धं=सुगन्धद्रव्यम्, रजतम्, सुवर्णं च तत्तत् कामयमानेभ्यो ददाविति । सर्वं च दीयमानं समये यथोपयोगं च ददाविति तस्य कृतयुगमेघोपमया द्योत्यम् ।

(१५) (क) 'विप्रोषितस्येव सुहृज्जनस्य
सन्दर्शनात् प्रीतिविजृम्भिताक्षः ।
याच्ञां प्रियाख्यानमिवाभ्यनन्द-
द्दत्वा च तुष्ट्यार्थिजनं जिगाय' ॥

(ख) 'दानोद्भवः कीर्त्तिमयः सुगन्ध-
स्तस्यार्थिनां वागनिलप्रकीर्णः ।
मदं जहारान्यनराधिपानां
गन्धद्विपस्येव परद्विपानाम्' ॥

(ग) तर्षं विनिन्येऽर्थिजनस्तमेत्य
न त्वर्थिनः प्राप्य स दानशौण्डः ।

न ह्यस्य दानव्यवसायमर्थी
याच्ञाप्रमाणेन शशाक जेतुम्' ॥

एषां व्याख्या विधीयताम् ।

उत्तरम्—( क ) शिबिजातके राज्ञो दानशीलतावर्णनेऽयं श्लोकः—

विप्रोषितस्य=दूरंगतस्य, सुहृज्जनस्य=आत्मबन्धोः, सन्दर्शनात्=प्रत्यक्षात् इव, प्रीतिविजृम्भिताक्षः=स्नेहविस्फारितदृष्टिः ( याचकेषु समागच्छत्सु प्रसन्नमनाः स राजा ), याच्ञां=प्रार्थनां, याचकैः क्रियमाणां, प्रियाख्यानम्=प्रियवार्त्ताम् इव, अभ्यनन्दत्=प्रसादेनाग्रहीत्, दत्त्वा=यथाप्रार्थितं प्रदाय यदृच्छालाभसञ्जातया च तुष्टया, अर्थिजनं=याचकवर्गं, जिगाय=वशीचकार । याचकेषु समागतेषु तान् प्रवासपरावृत्तान् निजबन्धूनिवाद्रियमाणः प्रीतिप्रफुल्लनयनश्च स राजा तेषां याचनावाक्यानि प्रियवार्त्तामिव मन्यमानः तेभ्यो यथाप्रार्थितं प्रदाय सन्तुष्टान् याचकान् आत्मवशीचकारेति भावः । पूर्वप्रकरणप्रक्रान्तं वंशस्थमेव वृत्तम् ॥

( ख ) शिबिजातके राज्ञो दानशीलतावर्णने पद्यमिदम् । तस्य दानोद्भवः=दानजन्मा, कीर्त्तिमयः=यशोरूपः, सुगन्धः, अर्थिनां=याचकानां, वागेवानिलो=वायुस्तेन प्रकीर्णः=विस्तारितः, सुगन्धः=सुवासः, गन्धद्विपस्य=( यस्य गन्धं समाघ्राय न तिष्ठन्ति परे द्विपाः, तं गन्धद्विपमाख्यान्ति ), एवं लक्षितस्य युद्धकरिणः सुगन्धः, परद्विपानाम्=अन्यगजानाम्, मदम् इव, अन्यनराधिपानां=परेषां राज्ञां, मदं=दानप्रभवं गर्वं, जहार=दूरीचकार ।

यथा वायुना नीयमानो गन्धद्विपस्य सुगन्धः परेषां गजानां गर्वं दूरीकरोति, तथैवास्य राज्ञः दानमयः सुगन्धोऽपि याचकवायुना विकीर्यमाणोऽपरेषां राज्ञां दानावलेपं परिजहारेति । उपमालङ्कारः । स्पष्टमन्यत् ॥

( ग ) प्रसङ्गः पूर्वोक्तानतिरिक्त एव ।

अर्थिजनः=याचकवर्गः, तम्=शिबिराजमेत्य=उपगत्य, तर्षं=स्वतृष्णां, विनिन्ये=दूरीकृतवान्, दानशौण्डः=दानवीरः, स=राजा तु अर्थिनः प्राप्य स्वं तर्षं न दूरीचकार । याचकस्ततो यथाभीष्टं प्राप्य समतुष्यत्, परमसौ याचकेभ्यो यथायाचितं प्रदायापि न समतुष्यदिति भावः । अस्य=राज्ञः, दानव्यवसायम्=दानतत्परतां, याच्ञाप्रमाणेन=याचनामात्रया, अर्थी=याचकः, जेतुं न शशाक=यावत् प्रार्थ्येत तावद् दीयेत, याच्ञामात्रा हि दातव्यमात्रां नातिशिश्य इति तात्पर्यम् । शेषं सुगमम् ।

(१६) व्याख्यायतामधस्तनः श्लोकः—

अथ क्षितीशस्य तमत्युदारं गात्रेष्वपि स्वेषु निवृत्तसङ्गम्।
विज्ञाय दानाश्रयिणं वितर्कं पतिप्रिया स्त्रीव मही चकम्पे ।।

उत्तरम्—शिविराजस्य दानवीरत्ववर्णनप्रसङ्गागतं पद्यमिदम्। अथ क्षितीशस्य=शिविराजस्य, तम् अत्युदारं=महान्तम्, गात्रेषु=शरीरावयवेषु, अपि निवृत्तसङ्गम्=आसक्तिरहितं, दानाश्रयिणं=दानविषयकम्, वितर्कं=तादृशं मनोभावं, विज्ञाय, पतिप्रिया=पतिगतप्राणा, स्त्री=वनिता इव, मही=पृथ्वी, चकम्पे=अवेपत। राजाशिवीनामयमत्युदारः कायं निजं दातुमपि कृतमतिः कदाचित् कस्मैचित् याचकाय स्वं शरीरमपि ददीतेति विभाव्य पृथ्वी पतिप्रिया वनितेव चकम्पे, यथा पतिप्रिया स्त्री निजं नाथं दातारं ज्ञात्वा स्वकायदानोद्धुरं विज्ञाय तदपायशङ्कया कम्पमाश्रयेत, तद्वदियं धरा तदपायशङ्कया सतसशङ्काऽतिष्ठदित्याशयः। उपमालङ्कारः।

(१७) दूरादपश्यन् स्थविरोऽभ्युपेतस्त्वच्चक्षुषोऽर्थी क्षितिपप्रधान !।
एकेक्षणेनापि हि पङ्कजाक्ष ! गम्येत लोकाधिप लोकयात्रा ।।

सप्रसङ्गं व्याख्यायतामयं श्लोकः।

उत्तरम्—शिविराजं दानिनं परीक्षितुं ब्राह्मणवेषधारी शक्रः समागतः, तं त्वं किं याचसे इति पृष्टवन्तं राजानं ब्राह्मणोऽत्र पद्ये स्वां याचनां कथयति—

हे क्षितिपप्रधान!=राजमुख्य!, अपश्यन=अन्धः, अहं स्थविरः=वृद्धः, त्वच्चक्षुषः=त्वन्नेत्रस्य, अर्थी=याचकः, दूरात्=विप्रकृष्टदेशात्, अभ्युपेतः=समागतोऽस्मि, हे पङ्कजाक्ष !=हे कमलनयन !, लोकाधिप=लोकनाथ, राजन्, एकेक्षणेन=एकेन नेत्रेण, अपि लोकयात्रा=संसारनिर्वाहः, गम्येत=साध्येत।

अहं दृष्टिशक्तिरहितो ब्राह्मणो नेत्रं याचितुं दूरदेशात् त्वत्समीपमागतोऽस्मि, तव द्वे अक्षिणी स्तस्तयोरेकमपि यदि त्वं मे ददासि, तदाहं लोकयात्रां निर्वहेय, अवशिष्टेनैकेन च नयनेन तवापि लोकयात्रा अबाधिता तिष्ठेदिति भावः। पङ्कजाक्षेति उपमा। लोकाधिपस्य लोकयात्रानिर्वाहतत्परता कर्त्तव्यभावमुपयाति, तदर्हसि त्वं स्वं चक्षुःप्रदाय मामुपकर्त्तुं, न च तथाकरणेऽपि तव लोकयात्रा व्याहन्यत इति तात्पर्यम्।

(१८) शक्रस्य शक्रप्रतिमानुशिष्टया त्वां याचितुं चक्षुरिहागतोऽस्मि।
सम्भावनां तस्य ममैव चाशां चक्षुःप्रदानात् सफलीकुरुष्व ।।

ससन्दर्भनिर्देशं व्याख्यायताम्।

**उत्तरम्**—केन प्रेरितस्त्वं चक्षुर्याचितुं त्वं मदन्तिकमायात इति राज्ञा पृष्टो विप्रो राजानमाह—शक्रस्येति—हे शक्रप्रतिम !=हे इन्द्रसदृश !, अहं शक्रस्य=इन्द्रस्य, आनुशिष्ट्या=आज्ञया, त्वां चक्षुः याचितुं=नेत्रं प्रार्थयितुम्, आगतोऽस्मि=उपस्थितोऽस्मि, तस्य=इन्द्रस्य, सम्भावनां=शिविराजः चक्षुरपि ददीतेति श्रद्धां, मम आशाम्=राजा मह्यं स्वं नेत्रं प्रददीतेति विश्वासं च, चक्षु प्रदानात्=नेत्रं स्वं प्रदाय, सफलीकुरुष्व=पूरय।

हे राजन् शक्राज्ञया चक्षुर्याचितुमहं त्वदन्तिकमागतः, तत् स्वं चक्षुःप्रदाय त्वमिन्द्रस्य सम्भावनां मदीयामाशां च पूरय। एकेनाक्ष्णा त्वया दीयमानेन इन्द्रस्य त्वद्गता श्रद्धापि पूर्यते ममापि चाशा फलवती स्यादिति धन्योऽसीति वक्तुराशयः।

(१९) स त्वं विशुद्धनयनोत्पलशोभितास्यः
सम्पश्यतो व्रज यथाभिमतं जनस्य।
स्यात् किन्नु सोऽयमुत नेति विचारदोला-
लोलस्य सोऽयमिति चोत्थित विस्मयस्य॥

सप्रसङ्गनिर्देशं व्याख्यायताम्।

**उत्तरम्**—चक्षुर्याचितुमुपगतं शक्रप्रेषितं ब्राह्मणं प्रति शिविराजस्य नेत्रदानतत्परता प्रत्यायकं पद्यमिदम्।

स त्वम्=मम नेत्रं याचमानो ब्राह्मणः मम दत्तेन नेत्रेण नेत्रवान् भूत्वा, विशुद्धेन नयनोत्पलेन=निर्दोषेण कमलोपमेन नयनेन, शोभितं=भूषितम्, आस्यं=मुखं, यस्य तादृशो भूत्वा संपश्यतः=वीक्षमाणस्य। किन्नु सोऽयं स्यात्=किमयं स एव, किमुत स नेति, विचार एव दोला=संशयः, सोऽयमिति निश्चये, उत्थितविस्मयस्य=आश्चर्यचकितस्य जनस्य, यथाभिमतं देशं, व्रज=गच्छ।

मया त्वत्प्रार्थनया नयने दीयमाने कमलतुल्यनेत्रशोभितमुखस्त्वं यथेच्छं गच्छ, त्वां तथा गच्छन्तं वीक्षमाणो लोकश्च पूर्वं किमयमसावेव, किमथवा स न इति संशयीत, परतश्चान्याङ्गसन्निवेशस्मरणादिना तत्त्वप्रतिभासे स एवायमिति बुद्धौ दृढायां कथमयं सदृष्टिरजनीति विस्मयेत इति तात्पर्यम्।

(२०) यदेव याच्येत तदेव दद्यान्नानीप्सितं प्रीणयतीह दत्तम्।
किमुह्यमानस्य जलेन तोयैः दास्याम्यतः प्राथितमर्थमस्मै॥

प्रकरणनिर्देशपूर्वकं व्याख्यायताम्।

उत्तरम्—चक्षुर्याचमानाय ब्राह्मणाय चक्षुर्दातुमातुरो राजा धनधान्यादि दीयतां न चक्षुरिति वादिनोऽमात्यान् प्रति कथयति—यदेवेति।

यदेव याच्येत=प्रार्थ्येत, तदेव=याचितानतिरिक्तं दद्यात्, अनीप्सितम् =अयाचितम्, दत्तमपि इह न प्रीणयति=सन्तोषयति। तत्रोदाहरणमाह—किमुह्यमानस्येति—तोयेन=जलेन, उह्यमानस्य=नीयमानस्य, तोयवतस्तद-कामयमानस्य च तोयेन किं जलेन किमपि साध्यं नास्तीति भावः, निर्गमयन् राजा स्वां दृढतामाह—अतः प्रार्थितं=नेत्ररूपं वस्तु एव, अस्मै=याचकाय दास्यामि। अलं धनधान्यादि-प्रार्थितेतरवस्तुप्रदाननिर्बन्धेन भवतामिति भावः।

(२१) या नाल्पेन तपःसमाधिविधिना सम्प्राप्यते केनचिद्
यामासाद्य च भूरिभिर्मखशतैः कीर्त्ति दिवं चाप्नुयात्।
सम्प्राप्तामतिपत्य तां नृपतितां शक्रर्द्धिविस्पर्द्धिनीं
किं दृष्ट्वा नयने प्रदित्सति भवान् कोऽयं कुतस्त्यो विधिः॥

सप्रसङ्गं व्याख्या कार्या।

उत्तरम्—शिविराजोऽमात्यैर्वार्यमाणोऽपि यदा चक्षुःप्रदातुमेवोद्यच्छति, तदा पुनरमात्यास्तं निवारयन्तः कथयन्ति—या नाल्पेनेति—या=नृपतिता राजभावः, नाल्पेन=महता, केनचित्=अज्ञातरूपेण, तपःसमाधिविधिना—तपसा=कायक्लेशनव्रतेन, समाधिना=मनोनिग्रहेण च, सम्प्राप्यते=अधिगम्यते, यां=नृपतिताम् च, आसाद्य=प्राप्य, वैभवसाध्यैः मखशतैः=भूरिभिः यज्ञैः, कीर्त्तिम्=यशो, दिवं=स्वर्गं च, आप्नुयात्=अधिगच्छेत्। शक्रर्धिविस्पर्द्धिनीम् =इन्द्रसमृद्धया स्पर्द्धमानां, तत्सदृशीं सम्प्राप्ताम् अतिपत्य=अनादृत्य, भवान् नयने=स्वचक्षुषी, प्रदित्सति=दातुमिच्छति, किं दृष्ट्वा=किं फलमुद्दिश्य? अयं विधिः=स्वनयनप्रदानतत्परतारूपः, कः=कीदृशः?, कुतस्त्यः=कुत्रत्यश्च?

या राजसत्ता महता तपसा समाधिना च लभ्यते। यया लब्धया वैभवयोगेन मखाः कर्त्तुं शक्यन्ते, यैः कीर्तिः शक्यप्राप्तिः स्वर्गोऽपि च सुलभो भवति, तस्यां राजसत्तायां प्राप्तायां तां निरादृत्य भवान् याचकप्रार्थनापारवश्येन स्वे नयने दातुमुद्यच्छति, तदयं विधिः कीदृशः कुत्रत्यश्चेति नावगम्यतेऽस्माभिः, अलीकोऽयं विधिरिति तथा विधानं न श्रेयस इति तात्पर्यम्।

(२२) नायं यत्नः सार्वभौमत्वमाप्तुं नैव स्वर्गं नापवर्गं न कीर्त्तिम्।
त्रातुं लोकानित्ययं त्वादरा मे याच्ञाक्लेशो मा च भूदस्य मोघः॥

व्याख्यायताम्।

उत्तरम्—वार्यमाणोऽपि मन्त्रिभिश्चक्षुर्दानप्रवृत्तेः शिविराजो निजां दानवृत्तिदृढतामावर्त्तयति—नायं यत्न इति ।

अयं चक्षुर्दानात्मा मम यत्नः सार्वभौमत्वम्=सर्वस्या भूमेः ईश्वरत्वम्, नैव स्वर्गं, न अपवर्गम्=मोक्षम्, न कीर्त्तिम्=यशो वा, आप्तुम्=लब्धुम्, अनेन नयनदानेन नाहमस्या भूमेः स्वामित्वं कामये, न स्वर्गं, न वा मोक्षं, न वा कीर्त्ति कामये, अयं तु मम प्रयासो लोकान् त्रातुं=विपदो वारयितुमेव । विपदत्रोपस्थितेत्याह—अस्य=याचकस्य वृद्धब्राह्मणस्य, याच्ञाक्लेशः=मामयं याचकतयाऽऽगत इति सोऽस्य क्लेशः, मोघः=व्यर्थः, मा भूत्=न जायताम्, इति क्लेशमस्य वारयितुमेव ममायमुद्यमः । स चानन्यथासिद्ध इति वृथा मां भवन्तो वारयन्ति । अतो मयाऽत्र याच्ञाक्लेशसाफल्यसम्पादनाय चक्षुःप्रदानप्रयासोऽवश्यं करणीय इति भावः ।

(२३) अन्तःपुरेऽथ मनुजाधिपतेः पुरे च
शोकाश्रुभिर्वसुमती सिषिचे समन्तात् ।
शक्रस्तु विस्मयमवाप परां च तुष्टिं
सम्बोधये नृपमकम्प्यमतिं समीक्ष्य ॥

व्याख्यायतामयं श्लोकः ।

उत्तरम्—अमात्यैर्बहुधा बोधितोऽपि शिविराजो यदा नेत्रदानाध्यवसायान्न व्यरमत्तदा—अथ मनुजाधिपतेः=मानवेन्द्रस्य, अन्तःपुरे=स्त्रीजनाध्युषिते गृहे, पुरे=नगरे च, वसुमती=पृथिवी, समन्तात्=सर्वतः, शोकाश्रुभिः=शोकप्रवाहितैर्नेत्रजलैः, सिषिचे=असिच्यत । शक्रस्तु=इन्द्रस्तु, सम्बोधये=सम्यग्ज्ञानप्रयुक्तबुद्धत्वप्राप्तये, कृतमतिं=स्थिरमानसं, नृपं समीक्ष्य=विभाव्य, विस्मयं=सातिशयमाश्चर्यम्, परां तुष्टिम्=अत्यर्थं सन्तोषं च अवाप । राजनि आद्ययाचकाय स्वं नेत्रं दातुं दृढमतौ तदीयेनान्तःपुरेण सहैव समस्तमपि तन्नगरं रुरोद, येन तद्गता भूमिरसिच्यत, इन्द्रश्च बुद्धत्वप्राप्तये राजानं स्थिरमानसं ज्ञात्वा विस्मयमानः परं समतुष्यदित्याशयः ।

(२४) ततश्चकम्पे सधराधरा धरा व्यतीत्य वेलां प्रससार सागरः ।
प्रसक्तगम्भीरमनोज्ञनिःस्वनाः प्रसस्वनुर्दुन्दुभयो दिवौकसाम् ॥

व्याख्यायतां सप्रसङ्गं पद्यमिदम् ।

उत्तरम्—ततः=शक्रप्रभावादुद्गतनेत्रद्वये शिविराजे, सधराधरा=सपर्वता,

धरा=पृथ्वी चकम्पे, वेलामतीत्य=मर्यादामतिक्रम्य, सागरः=समुद्रः, प्रससार=प्रोवाह। दिवौकसाम्=देवानां, दुन्दुभयः=वाद्यविशेषाश्च, प्रसन्नः=प्रसादजनकः, गम्भीरः मनोज्ञः=हृद्यश्च, निःस्वनः=शब्दो, येषां ते तथा प्रसस्वनुः=शब्दं चक्रुः।

शक्रप्रसादाद्राजनि समुद्भूतनेत्रद्वये आश्चर्येण पर्वतमाला परिवृता समग्रा पृथिवी चकम्पे, उद्वेलः सागरो मर्यादां विहाय चलितः, देवानां मनोहरप्रसन्नगम्भीरशब्दा वाद्यविशेषाश्च शुश्रुविरे, आश्चर्यं सर्वेऽपि चकितभावेनाभ्यनन्दयन् इति तात्पर्यम्।

(२५) उदीरिता हर्षपरीतमानसैः महर्धिभिर्भूतगणैः सविस्मयैः।
नृपस्य कर्मातिशयस्तदाश्रयाः समन्ततः शुश्रुविरे गिरः शुभाः॥

व्याख्या क्रियताम्।

उत्तरम्—शिविराजो यदा निजे चक्षुषी याचकाय प्रदत्तवान्, तदा शक्रप्रसादेन तस्य चक्षुषी पुनरुद्भवतां, तदेतदाश्चर्यं वीक्षमाणाः सर्वेऽपि लोकाः साधु साधु इति तं प्रशशंसुरिति प्रसङ्गः।

हर्षपरीतमानसैः=प्रसन्नतावशीकृतचित्तैः, सविस्मयैः=साश्चर्यैः, महर्धिभिः=महत्या समृद्धया युज्यमानैः, भूतगणैः=प्राणिभिः, समन्ततः=सर्वतः, अहो आश्चर्यजनको, नृपस्य=राज्ञः, कर्मातिशयः=विलक्षणं कार्यं चक्षुर्दानरूपम्, इति तदाश्रयाः=तन्मूलाः, शुभा गिरः=वाचः, शुश्रुविरे=अश्रूयन्त।

राजनि दानस्य परांकाष्ठां प्रदर्शितवति आश्चर्यजनकमिदं तत्कार्यमिति सर्वे लोकास्तस्मै शुभवादान् वितेरुरिति तात्पर्यम्।

(२६) परानुकम्पाविनयाभिजाताद्दानात्परः कोऽभ्युदयाभ्युपायः।
यन्मानुषं चक्षुरिहैव दत्त्वा प्राप्तं मयाऽमानुष दिव्यचक्षुः॥

प्रसङ्गप्रदर्शनपूर्वकं व्याख्या क्रियताम्।

उत्तरम्—परानुकम्पा=जीवदया, विनयो=नम्रभावश्च, ताभ्याम् अभिजातात्=मनोहरात्, दानात्=उत्सर्गात्, परः कः अभ्युदयाभ्युपायः=सिद्धिमार्गः?, सर्वोत्कृष्टः अभ्युदयस्य मार्गो जीवदयाविनयाभ्यां सहितं दानमेव, न ततः परः कोऽपि तदुपायो विद्यत इत्यर्थः। तत्र साधकं दृष्टान्तमाह—यन्मानुषमिति। यत्=यतः, इहैव=भवतां पुरत एव, मानुषं=सकललोकसाधारणं, चक्षुः=निजं नयनं दत्त्वा, मयाऽमानुषं=मानवदुरवापं, दिव्यम्=अलोक-

( ख ) निसर्गसौम्यस्य वसुन्धराधृतेरहो परेषां व्यसनेष्वमर्षिता ।
अहो मदीया गमिता प्रकाशतां खट्टुङ्कता विक्रमसम्पदानया ।।

( ग ) अनेन नाथेन सनाथतां गतं
न शोचितव्यं खलु साम्प्रतं जगत् ।
पराजयाशङ्कितजातसम्भ्रमो
ध्रुवं विनिश्वासपरोऽद्य मन्मथः ।।

उत्तरम्—( क ) स्वशरीरं दत्त्वा बुभुक्षापीडिताया व्याघ्र्याः प्राणेषु रक्षितेषु तादृशमसाधारणं कार्यं पश्यतां ब्राह्मणशिष्याणामाश्चर्यप्रकाशिका उक्तिरियम् ।

व्यसनातुरे=कष्टनिमग्ने व्याघ्रीरूपे जने, अस्य=अस्मद्गुरोः, दया=परदुःखप्रहाणेच्छा, अहो=आश्चर्यकरी । अस्य महात्मनः स्वसौख्यनैःसङ्ग्यम् =स्वशरीरसुखे, नैःसङ्ग्यम्=अनासक्तिः, अहो=नितान्ताश्चर्यजनकम् । अहो=आश्चर्यम्, अनेन महात्मना अस्मद्गुरुणा सतां स्थितिः=दशा, प्रकर्षम् गमिता=उत्कर्षं प्रापिता, अहो=आश्चर्यम्, परेषाम् यशःश्रियः=कीर्त्तयः, मृदिताः=चूर्णीकृताः अनेनेति योजना ।

अस्मद्गुरुणा व्याघ्रीप्राणरक्षार्थं शरीरमुत्सृष्टवता या स्वीया दया प्रकाशिता, यच्च स्वं शरीरानासक्तत्वं प्रदर्शितं, येन यथा च सतां स्थितिः उत्सर्षं गमिता, यथा च दानपरायणानां यशांसि खर्वीकृतानि, सर्वमपीदं कार्यजातमाश्चर्यं जनयतीति भावः ।

( ख ) ब्राह्मणेन शरीरदाने तत्र विस्मयमानस्य तच्छिष्यान्यतमस्य मनोभावोऽत्र वर्णितो बोध्यः ।

निसर्गसौम्यस्य=स्वभावरम्यस्य, वसुन्धराधृतेः=क्षमया पृथिवीसमस्य, अस्य=अस्मद्गुरोः, परेषां व्यसनेषु=परदुःखेषु, अमर्षिता=असहनशीलता, अहो=आश्चर्यकरी । अहो=आश्चर्यम्, अनया=प्रत्यक्षदृश्यया, अस्य विक्रमसम्पदा=शरीरदानपराक्रमेण, मदीया=मत्सम्बन्धिनी, खट्टुङ्कता=निर्दयता, प्रकाशं गता=प्रकटीभूता ।

स्वभावसुन्दरस्य पृथ्वीसदृशक्षमाशीलस्यास्य मम गुरोरनेन शरीरसमर्पणेन यथैव तदीया परदुःखासहिष्णुता व्यक्ता, तथैव मम कठोरहृदयताऽपि प्रकाशिता, यदसौ स्वशरीरं दत्तवानहं तु नेति भावः ।

( ग ) शरीरदानेनाश्चर्यं कर्म कृतवतो ब्राह्मणस्य स्तुतौ पद्यमिदम् ।

अनेन=शरीरदानसमर्थेन, नाथेन=स्वामिना, सनाथतां गतं जगत्= विश्वं, साम्प्रतं न शोचितव्यम्, यत्र जगति एतादृशो दानी तन्न सम्प्रति शोचनीयमित्यर्थः । अद्य=सम्प्रति, पराजयेन=विजयेन, आशङ्कितं=भीतं, मानसं यस्य तादृशः, मन्मथः=कामः, भृशं विनिःश्वासपरः=कदुष्णश्वासपरतया मर्माहतो जातो बोध्यः ।

सम्प्रति स्वशरीरमुत्सृजता जनेन सनाथीकृतं जगन्न शोचनीयं, कामोऽपि पराजयेन निःश्वसिति, स्वशरीरदाने कामात्मताऽनाद्रियमाणा कामपराजयमेव सूचयतीति तात्पर्यम् ।

( १२ ) व्याख्यायताम्—

'तत्कर्मविस्मितमुखैरथ तस्य शिष्यैर्गन्धर्वयक्षभुजगैस्त्रिदशाधिपैश्च ।
माल्याम्बराभरणचन्दनचूर्णवर्षैश्छन्ना तदस्थिवसुधा वसुधा बभूव' ।।

उत्तरम्—ब्राह्मणद्वारा स्वशरीरं दत्त्वा व्याघ्रीप्राणरक्षणे कृते सति सर्वेऽपि तच्छिष्या यक्षगन्धर्वभुजगादेवाश्च तदस्थिपुष्पवर्षेण सममानयन्निति प्रसङ्गः ।

तेन=शरीरदानात्मकेन कर्मणा, विस्मितानि=साश्चर्याणि, मुखानि येषां तादृशैः, तस्य=शरीरदातुः ब्राह्मणस्य, शिष्यैः, यक्षैः, गन्धर्वैः, भुजगैस्तत्तद्योनिजन्मभिः, त्रिदशाधिपैः=देवप्रमुखैश्च, माल्यस्य=पुष्पस्रजः, अम्बरस्य=वस्त्रस्य, आभरणस्य=भूषणस्य, चन्दनचूर्णस्य च वर्षैः=धारासम्पातैः, छन्ना=आवृता, तदस्थिवसुधा=ब्राह्मणास्थिधरा, वसुधा=वस्तुतो रत्नधात्री धरणी बभूव ।

यस्मिन् स्थाने ब्राह्मणेन शरीरपातः कृतस्तत्र तदस्थीनि विकीर्णान्यासन्, तादृशं विस्मयावहं तत्कर्म वीक्षमाणाः सर्वेऽपि शिष्या, गन्धर्वा, यक्षा भुजगाश्च तत्र माल्यानि अम्बराणि चन्दनचूर्णानि च ववृषुर्येन च्छन्ना तदस्थिधात्री धरणी वस्तुतो रत्नधात्री समजायतेति भावः ।

## शिबिजातकम्

( १३ ) ( क ) विडम्बनेवाविनयोद्धतानां
दुर्भेद्यसामापदिवातिकष्टा ।
अल्पात्मनां या मदिरेव लक्ष्मी-
र्बभूव सा तत्र यथार्थनामा ।।

उत्तरम्—( क ) स्वल्पिका = अल्पमात्रापि, सुगतपरिचर्या = आस्रव-रहितसाधुसंन्यासिसेवा, न प्रतनुफलविभूतिः = महतः फलस्य साधनं विद्यते, इति यत् प्राक् केवलं श्रुतम्, तदिदं = पूर्वतः श्रूयमाणं स्वल्पापि साधुसेवा महत्या विभूतेर्जनकम् इति प्राचीनं कथनम्—अलवणायाः = लवणेन रहितायाः, शुष्करुक्षारुणायाः—शुष्का = नीरसा, रुक्षा = निर्गतस्नेहा, अरुणा = रक्तवर्णा च, या तस्याः कुल्माषपिण्ड्याः = द्विदललेशस्य, शाकविशेषस्य वा, फलं पश्य ।

स्वल्पमात्रापि सुगतसपर्या भूयसे विभवाय जायते इति यत् पूर्वमश्रृण्वन् भवन्तस्तदिदानीं पश्यन्तु प्रत्यक्षम्, शुष्कां रुक्षामरुणां च कुल्माषपिण्डीं पिण्डीभूतं द्विदलं शाकं वा लवणेनापि शून्यं यदहं दत्तवान् तस्यैव फलं ममेयती समृद्धिरिति कथयितुराशयः । मालिनीवृत्तम् ।

( ख ) मे = मम, रथाः = यानानि, तुरगाः = अश्वाश्च, तैः विचित्रम्, मत्ताः = मदस्राविणो, नागाः = करिणश्च, तैरिन्द्रनीलम् = श्यामवर्णम्, रथाश्वगजशालि, अकृशम् = बलवत्तरम्, इदं बलम् = सैन्यम्, केवला = सम्पूर्णा, मेदिनी = पृथ्वी च, बहु धनं = प्रभूता सम्पत्तिश्च, सुवर्णरजतरत्नादिरूपं वसु, अनुरक्ता = अनुरागिणी श्रीः, उदाराः = विशालहृदया दाराश्च, ( एतत्सर्वं यानवाहनसैन्यपृथ्वीस्वर्णवनितालक्ष्मीरूपं वैभवम् ) कुल्माषपिण्ड्याः = पिण्डाकारस्य, शाकस्य द्विदलस्य वा, पूर्वं मया दत्तस्य, फलसमुदयशोभाम् = फलत्वेन दृश्यमानं पश्येति तात्पर्यम् ।

सम्प्रति मम यदिदं वैभवं यानगजाश्वरूपं, सम्पूर्णपृथिवीरूपं सदानुरागिवनितारूपं वा पश्यन्ति भवन्तस्तदिदं सर्वं पूर्वं मया दत्तस्य लवणरहितस्य रुक्षस्य च शाकस्य द्विदलस्य वा फलमवगच्छन्तु । अहो दानस्य माहात्म्यमिति तात्पर्यम् ।

( ३० ) ( क ) सुप्तप्रबुद्ध इव जातिमनुस्मराभि
यस्यामिहैव नगरे मृतकोऽहमासम् ।
शीलान्वितोऽपि धनमात्रसमुच्छ्रितेभ्यः
कर्माभिराधनसमार्जितदीनवृत्तिः ॥

( ख ) सोऽहं भृतिं परिभवश्रमदैन्यशालां
त्राणाशयात्स्वयमवृत्तिभयाद्विविक्षुः ।
भिक्षार्थिनाश्च चतुरः श्रमणानपश्यं
वश्येन्द्रियाननुगतानिव भिक्षुलक्ष्म्या ॥

(ग) तेभ्यः प्रसादमृदुना मनसा प्रणम्य
कुल्माषमात्रकमदां प्रयतः स्वगेहे ।
तस्याङ्कुरोदय इवैष यदन्यराज-
चूडाप्रभाश्चरणरेणुषु मे निषक्ताः ॥

एषां व्याख्या सम्पाद्यताम् ।

उत्तरम्—(क) सुप्तप्रबुद्धः=संजातप्रबोधो, विगतनिद्रतया जाग्रत् इव, जातिम्=प्राक्तनजन्मवृत्तम् अनुस्मरामि, यस्यां=जातौ जन्मनि, धनमात्रसमुच्छ्रितेभ्यः=केवलेन धनेन प्रोन्नतेभ्यः परेभ्यः, शीलान्वितः=सद्व्यवहारपरोऽपि, अहम् कर्माभिराधने=स्वोचितकर्मसम्पादने, समर्जिता=उपगता, दीनवृत्तिः=दैन्यदशा, येन तादृशः इहैव=अत्रैव नगरे, आसम्=अभवम् । शिविराजो जातिस्मरतया प्राक्तनं जन्मवृत्तमाहात्र श्लोके । यथा सुप्तप्रबुद्धः पूर्वतनं सर्वमनुस्मरति तथैवाहमपि प्राक्तनजन्मवृत्तं स्मरामि । तदेवाह—शीलेति—यद्यपि धनिकजनेषु समुदायाहमवहं तथापि दरिद्रः कर्मपरायणश्च भूत्वा साधारणजन इव पूर्वजन्मनि अत्रैव पुरे न्यवात्सम् इति ।

(ख) कोशलराजो जातिस्मरत्वं प्रमाणयितुं स्वपूर्वजन्मवृत्तमाह—सोऽहमिति । सः पूर्वजन्मनि अत्रैव नगरे दीनभावेन निवसन्नहम्, परिभवस्य=अनादरस्य, श्रमस्य=कायिकक्लेशस्य, दैन्यस्य=दरिद्रतायाश्च, शालाम्=निकेतभूताम्, भृतिम्=वृत्तिम्, प्राणरक्षोपायम्, त्राणाशयात्=रक्षामुद्दिश्य, अवृत्तिभयात्=जीविकावञ्चितो न स्यामिति भयेन च, भृतिं=काश्चन वृत्तिं, विविक्षुः=प्रवेष्टुमिच्छुः, किमपि जीवन्नोपायिकं परिवाररक्षाक्षमं भृतकमन्वेष्टुमित्यर्थः वश्येन्द्रियान्=जितेन्द्रियान्, भिक्षुवृत्त्या=भिक्षकाचारेण, अनुगतान्=युक्तान् इव, चतुरः=चतुःसंख्यकान्, श्रमणान्=भिक्षुसाधूनपश्यं=दृष्टवान् । पूर्वस्मिन् जन्मनि अहं वृत्तिमन्वेष्टुं चलितश्चतुरः श्रमणानवलोकितवानिति भावः ।

(ग) तेभ्यः=साधुभ्यः, प्रसादमृदुना=प्रसन्नतया मृदुतां गतेन मनसा, प्रणम्य=नत्वा, प्रयतः=संयतेन्द्रियोऽहं, स्वगेहे=स्वभवने, कुल्माषमात्रम्=द्विदलमेव (शाकमेव वा), अददाम्=दत्तवान् । दरिद्रस्य मम गृहे प्रदेयान्तराभावेनाहं साधुभ्यः समुपस्थितं शाकमात्रमेव सप्रसादं दत्तवानिति पूर्वार्धार्थः । तस्य=दत्तस्य द्विदलस्य शाकस्य वा, अङ्कुरोदय इव=अङ्कुरप्ररोह इव, एषः=दृश्यमानः, यद् अन्येषां=मदतिरिक्तानां राज्ञां, चूडा=शिरोभूषणम्,

तस्या प्रभाः=कान्तयः, मम चरणरेणुषु निषक्ताः=संलग्नाः। अहं पूर्वजन्मनि साधुभ्यः कुल्माषमात्रं दत्तवान्, तत्पुण्यप्रभावेण सम्प्रति सर्वेऽपि राजानो ममाग्रे नमन्ति, तन्मस्तकमणिप्रभाश्च मम चरणरेणून् रञ्जयन्ति। तदिदं पूर्वजन्मवृत्तं मया स्मर्यमाणं बोध्यम् ॥

( ३१ ) ( क ) बाल्येऽनुभूतमिव तत्समनुस्मरामि
दासी सती यदहमुद्धृतभक्तमेकम्।
क्षीणास्रवाय मुनये विनयेन दत्त्वा
सुप्तेव तत्र समवायमिह प्रबोधम् ॥

( ख ) एतत्स्मरामि कुशलं नरदेव येन
त्वन्नाथतामुपगतास्मि समं पृथिव्या।
क्षीणास्रवेषु न कृतं ननु नाम किञ्चि-
दित्युक्तवानसि यथैव मुनिस्तथैव ॥

पद्यद्वयं विशदं व्याख्यायताम्।

उत्तरम्—( क ) कोशलराजस्य पत्नी अपि जातिं स्मरतिस्म, सा स्वपूर्वजन्मवृत्तमाह—बाल्येऽनुभूतमिवेति—बाल्येऽनुभूतं=बाल्यावस्थायां कृतं दृष्टं वा, यथा यौवने स्मरति लोकस्तथाहं समनुस्मरामि=संस्कारमहिम्ना पश्यामि, यदहं दासी सती, एकमुद्धृतभक्तम्=उद्धृत्य किञ्चिन्मात्रं भक्तम्, क्षीणास्रवाय=विगतवासनाय, मुनये विनयेन=नम्रभावेन दत्त्वा, तत्र सुप्ता इव इह=अत्र, प्रबोधं समवायम्। पूर्वजन्मनि दासीकार्यं कुर्वती अहं याचकाय श्रमणाय किञ्चिन्मात्रं भक्तं दत्तवती, तत्प्रभावेण मयात्र जन्मनि त्वदर्धाङ्गिनीयपदं प्राप्तमित्यहं पूर्ववृत्तं सुप्तप्रबुद्धेव स्मरामीति भावः।

( ख ) एतत्स्मराभि=इदमहमभिजाने, कुशलं=सम्यक्, यत्=येन कर्मणा मुनये भक्तदानपुण्येन, पृथिव्या समं=सह, त्वन्नाथतामुपगतास्मि=यथा पृथिवी त्वया नाथवती तथैवाहमपि त्वत्सनाथा जातास्मि, येन पुण्येनेदं महत् पदं राजरमणीपदं प्राप्तं तदेव विवृणोति—क्षीणास्रवेषु इति।

ननु नाम किञ्चित्=अ.गणनीयं साधारणं भक्तमात्रदानरूपं, क्षीणास्रवेषु=विगतवासनेषु, न कृतम्=किमपि अत्यल्पं तदिति भावः। यथाहं जातिस्मरा, तथैव त्वमपि, यथा मुनिः=श्रमणो वीतरागस्तथैव=त्वमपि वीतरागो जातिस्मरश्च, तत्त्वं सम्प्रत्येव कुल्माषदानकथाप्रसङ्गेन उक्तवानसीत्यर्थः ॥

( ३२ ) ( क ) त्यक्तव्यं विवशेन यन्ननु तथा कस्मैचिदर्थाय यत्
तन्न्यायेन धनं त्यजन्यदि गुणं कश्चित्समासादयेत् ।
कोऽसौ तत्र भजेत मत्सरपथं जानन्गुणानां रसं
प्रीत्याद्या विविधाश्च कीर्त्यनुसृता दानप्रतिष्ठागुणाः ॥

( ख ) दानं नाम महानिधानमनुगं चौराद्यसाधारणं
दानं मत्सरलोभदोषरजसः प्रक्षालनं चेतसः ।
संसाराध्वपरिश्रमापनयनं दानं सुखं वाहनं
दानं नैकसुखोपधानसुमुखं सन्मित्रमात्यन्तिकम् ॥

( ग ) विभवसमुदयं वा दीप्तमाज्ञागुणं वा
त्रिदशपुरनिवासं रूपशोभागुणं वा ।
यदभिलषति सर्वं तत्समाप्नोति दाना-
दिति परिगणितार्थः को न दानानि दद्यात् ॥

व्याख्यायताम् ।

उत्तरम्—( क ) यत् धनं नु विवशेन = पारवश्येन, त्यक्तव्यं = हातव्यम्, यत् च कस्मैचिदर्थाय = प्रयोजनाय न, तत् धनं न्यायेन = उचितपात्रार्पणद्वारा, त्यजन् = वितरन्, यदि कश्चित् गुणम् = अभ्युदयं, समासादयेत् = प्राप्नुयात्, तत्र कः असौ जनः यः मत्सरपथं = मात्सर्यमकर्त्तव्यबुद्धिं भजेत, न कोऽपीत्यर्थः । प्रीत्याद्याः = प्रसन्नताप्रभृतयः, कीर्त्यनुसृताः = कीर्त्या अनुगता, दानप्रतिष्ठागुणाः = दानफलानि ।

यत् धनं मरणकाले विवशीभूय त्यक्तव्यमेव, तद्धनं यदि कस्मैचिदपि फलाय न भवति, तद्यदि कस्मैचित् प्रदीयते तदा कोऽपि गुणः प्राप्यत एव । अस्यां स्थितौ दाने कस्य मात्सर्यं जायेत ? दानस्य कीर्त्तियुतः प्रसादस्तु सद्यः फलं, तदवश्यं दानपरेण भाव्यमिति भावः ।

( ख ) दानं महानिधानम् = उत्कृष्टो महान् निधिः, अनुगम् = अनुगामि च । चौराद्यसाधारणम्—धनं चौरेण राज्ञा जलेन वह्निना च ह्रियते, दानं तेभ्योऽस्पृष्टम् । मत्सरः = परेषां गुणेषु दोषान्वेषणम्, लोभः, एव दोषः, स एव रजः = मालिन्योत्पादकं, तस्य चेतसः = हृदयदेशात्, प्रक्षालनम् = अपनयनं, दानम्, संसारो = जीवनयात्रा एव, अध्वामार्गस्तत्र यः परिश्रमः = श्रमः, तस्य अपनयनम् = दूरीकरणसमर्थम्, सुखम् = प्रीतिजनकं वाहनम्, तत् दानं नैकसुखो-पधानम् = विविधसुखसाधनम्, तत् अन्तिकम् = समीपगतं सन्मित्रमिव ।

अयमाशयः—दानं सततानुगामि निधानम्, दानं चौरादिद्वारकापहरणशङ्कार-हितम्, दानं मत्सरलोभदूरीकरणसमर्थम्, दानं चित्तस्य प्रसादकम्, जीवनयात्रा-श्रमापहरणाय दानं सुखं वाहनमपि, सन्मित्रमिव च तत्, अतस्तदवश्यं करणीय-मिति भावः ।

( ग ) विभवसमुदयम्=सर्वविधां समृद्धिम्, दीप्तम्=प्रकाशयुतम्, आज्ञा-गुणम्=आज्ञापनशक्तिं, प्रभुसत्तां वा, त्रिदशपुरनिवासम्=स्वर्गवासम्, रूपस्य =शोभायाश्च गुणं वा । यत् किञ्चित् अभिलषति तत्सर्वं प्रागुक्तरूपं दानात् समाप्नोति=अधिगच्छति, इति=एवम्, परिगणितार्थः=विचारितप्रयोजनः, कः दानानि न दद्यात् ? सर्वोऽपि दद्यादित्यर्थः ।

यदि धनं लब्धुमिष्यते, रूपं शोभां वा आज्ञापकताशक्तिं वा लब्धुमिष्यते, एवं यत्किमपि लिप्सते तत्सर्वं दानगुणेन प्राप्नोति, तदेवं विभावयन् को दानाय न प्रवर्त्तेत ? सर्वोऽपि तथा प्रवर्त्तेतैवेति भावः ।

## श्रेष्ठिजातकम्

( ३३ ) (क) दद्यान्न दद्यादिति तत्र नासीद्विचारदोलाचलमानसोऽर्थी ।
ख्यातावदाने हि बभूव तस्मिन्विस्रम्भधृष्टप्रणयोऽर्थिवर्गः ॥
(ख) नासौ जुगोपात्मसुखार्थमर्थं न स्पर्द्धया लोभपराभवाद्वा ।
स त्वर्थिदुःखं न शशाक सोढुं नास्तीति वक्तुं च ततो जुगोप ॥
व्याख्या कार्या ।

उत्तरम्—( क ) श्रेष्ठिजातककथायां श्रेष्ठिना दानशीलताख्यापनपरं पद्य-मिदम् ।

तत्र=तस्मिन् श्रेष्ठिनि, अयं याच्यमानः श्रेष्ठी दद्यात्=वितरेत्, अथवा न दद्यादिति=सन्दिहानः, अर्थी=याचकः, विचार एव दोला=चञ्चलतापादकः, स्थितिविशेषस्तेन चलम्=चपलम्, मानसम्=मनो, यस्य तथाभूतः न आसीत् । यं याचितुं प्रवर्त्तमानो याचकः कदाचिदपि अयं दास्यति न वेति सन्देहेन न क्लिश्यतेस्मेति यावत् । तदेव विशदयति—उत्तरार्धेन, ख्यातावदान इति । तस्मिन्=श्रेष्ठिनि, ख्यातावदाने=प्रख्यातदानयशसि, अर्थी=याचकः, तस्य वर्गः=याचकसमूहः, विस्रम्भेण=विश्वासेन, अयं दास्यत्येवेति विश्वासेन, धृष्टः=दृढः, प्रणयो=दातृत्वकृतः प्रेमा, यस्य तादृश आसीत् । तस्य याच-

कतायां याचकानां निश्चिता दातृत्वमतिस्तान् विश्वस्तान् धृष्टान् कृतवतीति तात्पर्यम् ।

( ख ) असौ=श्रेष्ठिवरः, आत्मसुखार्थम्=स्वसुखस्य कृते, अर्थं न जुगोप =धनं न ररक्ष, स्पर्द्धया=अहमितरजनापेक्षया धनिकत्वेन गणितः स्यामिति बुद्धया वा, लोभपराभवात्=लोभविजितत्वात् वा हेतोः, धनं न जुगोपेति पूर्वेणान्वयः। तर्हि किमर्थं धनं जुगोपेति समर्थयति—स तु अर्थिदुःखम्=याचकानां कष्टम्, सोढुम्=मर्षितुम्, न शशाक=शक्नोतिस्म, नेति वक्तुं च न शशाक, ततो=तस्मात् कारणात् धनं जुगोप ।

तस्य श्रेष्ठिनो धनसञ्चयप्रवृत्तिः न धनेन सुखं भविष्यतीति बुद्धया, न परापेक्षया धनिकत्वेन परिगण्येयेति बुद्धया वा प्रेरिताऽऽसीत्, स याचकानां कष्टं सोढुं नाशकत्, न इति वक्तुं च नाशकत् अत एव धनं ररक्षेति भावः ।

( ३४ ) 'अथ कदाचित्तस्य महासत्त्वस्य भोजनकाले स्नातानुलिप्तगात्रस्य कुशलोदारसूदोपकल्पिते समुपस्थिते वर्णगन्धरसस्पर्शादिगुणसमुदिते विचित्रे भक्ष्यभोज्यादिविधौ तत्पुण्यसम्भाराभिवृद्धिकामो ज्ञानाग्निनिर्दग्धसर्वक्लेशेन्धनः प्रत्येकबुद्धस्तद्गृहमभिजगाम भिक्षार्थी ।'

प्रसङ्गप्रदर्शनपूर्वकं व्याख्यायताम् ।

**उत्तरम्**—अथ कदाचित्=एकदा, महासत्त्वस्य=महात्मनः, तस्य=श्रेष्ठिनः, भोजनकाले=भोजनस्य समये, स्नातानुलिप्तगात्रस्य—पूर्वं स्नातं=कृतस्नानं, पश्चादनुलिप्तं=कृतचन्दनलेपं च, गात्रं यस्य तादृशस्य सतः, कुशलाः=निपुणाः, उदाराश्च, ये सूदाः=पाचकास्तैरुपकल्पिते=सज्जीकृते, समुपस्थिते =पुरतः कृते, वर्णेन-गन्धेन-रसेन-स्पर्शेन=सुरुचिरवर्णेन सुगन्धिना मधुरादिसद्रसयुक्तेन च, गुणेन-समुदिते=युक्ते, विचित्रे=नानाप्रकारे, भक्ष्यं भोज्यं च=तत्प्रकारे, तत्पुण्यसंभारस्य=श्रेष्ठिनो दानप्रयुक्तपुण्यराशेः, अभिवृद्धिकामः=वर्द्धनपरः, ज्ञानमेव अग्निस्तेन निर्दग्धः=सर्वथा दग्धः, सर्वं क्लेश एव इन्धनं येन—तादृशः ज्ञानं प्राप्य सर्वविधादपि क्लेशान्मुक्तः, प्रत्येकबुद्धः=कश्चनभिक्षुः, भिक्षार्थी भूत्वा तद्गृहं=श्रेष्ठिनो भवनमभिजगाम=आयातः । भोजनसमये एकदा यदासौ स्नातानुलिप्तः पाचकगणोपहृते सुगन्धवर्णरसान्विते नानाप्रकारके भोजनविधौ प्रवर्त्तिष्यमाण आसीत्तदैव कश्चन ज्ञानाग्निदग्धसकलक्लेशः कश्चन बुद्धस्तत्राजगामेति भावः ।

( ३५ ) (क) अर्थिप्रशंसावचनप्रलुब्धा दित्सन्ति दानव्यसनेन येऽर्थान् ।
शरत्सहस्राणि बहूनि तेषामस्मिन्निवासोऽसुलभप्रवासः ॥

(ख) अर्थस्त्रिवर्गस्य विशेषहेतुस्तस्मिन् हते केन हतो न धर्मः ।
धर्मं च हत्वार्थनिबर्हणेन कथं नु न स्यान्नरकप्रतिष्ठः ॥

सप्रसङ्गं व्याख्यायताम् ।

उत्तरम्—( क ) श्रेष्ठिजातके श्रेष्ठिनि भोजनार्थमुद्युञ्जाने उपस्थापिते सूदैर्नानाविधे भोज्यवस्तुनि याचका उपस्थिताः, श्रेष्ठी प्रसन्नमनास्तेभ्यो भोजनं दातुं स्वां पत्नीमुक्तवान् । यदा च तत्पत्नी भोजनं दातुं प्रचलिता, तदा श्रेष्ठिनः परीक्षार्थं मारो मध्येमार्गं रौरवं नाम नरकं भावितवान् । तस्यां स्थितौ सा न्यरुध्यत । तां तथाविधां दृष्ट्वा श्रेष्ठी पुरः पश्यतिस्म भीषणं नरकम् । तस्मिन्सचिन्ते मारो हितकाम इव आकाशादुवाचेति प्रसङ्गः ।

अर्थिनां=याचकानां, प्रशंसावचनैः=स्तुतिवाग्भिः, प्रलुब्धाः=प्रतारिताः, याचकजनोदीरितप्रशंसावाक्यानि निशम्य दानाय कृतमतयः सन्तः दानव्यसनम्=दानविषयको दुरभिलाषस्तेन, ये=जना, अर्थान् दित्सन्ति=धनानि अन्नपानवसनादीनि दातुमिच्छन्ति, तेषाम्=जनानाम्, अस्मिन्पुरतो दृश्यमाने नरके, बहूनि शरत्सहस्राणि=बहुसहस्रवर्षपर्यन्तम्, असुलभप्रवासः=दुर्लभनिर्गमः, निवासः=स्थितिः, भवतीति शेषः । ये याचक स्तुतिवाक्यप्रतारिताः सन्तो धनानि दातुं तत्परा भवन्ति, तेषामिह वासो बहुसहस्रवर्षपर्यन्तं जायते, न च भवति तेषामितो निस्तार इति तात्पर्यम् ।

( ख ) प्रसङ्गः पूर्वोक्त एव ।

अर्थः=धनं, त्रिवर्गस्य=धर्मकाममोक्षरूपस्य, पुरुषैः काम्यमानस्य विशेषहेतुः असामान्यं कारणम्, तस्मिन्=अर्थे, हते=दानादिना विनाशिते, को धर्मो न हतः=विनाशितः ?, सर्वोऽपि त्रिवर्गो धनसाध्यत्वेन धननाशेन विनश्यतीत्यर्थः । एवं धननिबर्हणेन=धनप्रदानद्वारा, धर्मं हत्वा=धनसाध्यं धर्मं विपाद्य, दाता-जनः कथं नरकप्रतिष्ठः=नरकावस्थायी न स्यात् ?, त्रिवर्गसाधनं धनं ददतो जनस्य धर्मनाशकतया नरकवासोऽवश्यं भवतीति दानं न कर्तव्यमिति मारवचनस्य तात्पर्यम् ।

(३६) (क) तत्साधु दानाद्विनियच्छ बुद्धिमेवं हि सद्यः पतनं न ते स्यात् ।
विचेष्टमानैः करुणं रुदद्भिर्मा दातृभिर्गाः समताममीभिः ॥

(ख) दानादधर्मं च यदूचिवाँस्त्वमर्थं च धर्मस्य विशेषहेतुम् ।
तन्मानुषी नेयमवैति बुद्धिर्दानादृते धर्मपथो यथार्थः ॥

व्याख्याद्वारा तात्पर्यं प्रकाश्यताम् ।

उत्तरम्—( क ) तत्=तस्मात् दानान्नरकवासो भवतीति निश्चित्य, साधु=सम्यक्प्रकारेण, दानात्=दानरूपात् नरकहेतोः, बुद्धि विनियच्छ=निगृहाण, एवंकृते दानात् बुद्धौ निगृहीतायां, ते=तव, सद्यःपतनं=तत्काल एव नित्यनिवासो न स्यात्। एवमकरणे फलमुपपादयति—विचेष्टमानैरिति—

विचेष्टमानैः=नरकादस्मान्निर्गन्तुं विविधाश्चेष्टाः कुर्वाणैः ( अशक्तौ ), करुणं रुदद्भिः=विलपद्भिः, अमीभिः=प्रत्यक्षदृश्यैः, दातृवर्गैः=दानसक्तपुरुषैः, समतां=सादृश्यं, मा गाः=न प्राप्नुयाः। दानात्त्रिवर्गनाशो भवतीति प्रतीत्य आत्मानं दानपथान्निवर्त्तय, यदि त्वं तथा न करोषि तदा तवात्र नरके वासो भविष्यति, एवं मा कुरु, अन्यथा ये दातारोऽत्र नरके विलपन्ति, न चातो निर्गन्तुं शक्नुवन्ति, त्वमपि तादृश एव भविष्यसि, तस्माद्दानान्निवर्त्तस्वेति तात्पर्यम्।

( ख ) त्वं यत् दानात् अधर्मम्=त्रिवर्गक्षतिरूपम्, ऊचिवान्=कथितवान्, अर्थं च धर्मस्य विशेषहेतुम् ऊचिवान्=धनं धर्मस्यासाधारणं करणमुक्तवान्, तत भवतोच्यमानं मानुषी इयं मम बुद्धिः न अवैति=प्रत्येति। दानादृते=दानातिरिक्तः (कश्चन), यथार्थः=वास्तविकः, धर्मपथः=धर्ममार्गो, भवतीति मम बुद्धिर्नाधिगच्छतीति भावः। दानात् त्रिवर्गस्य नाशो जायते, तद्धर्मरक्षार्थं दानं न कुर्विति मारस्य वचसि विश्वासं न कृत्वा श्रेष्ठी तमाह पद्यमिदम्।

धर्मस्य मूलं दानमिति यथार्थः पन्था इति च तदाशयः॥

( ३७ ) पुण्यानुभावादथ तस्य तस्मिन्नपङ्कजं पङ्कजमुद्बभूव।
अवज्ञयेवजहास मारं यच्छुक्लया केशरदन्तपङ्क्त्या॥

सप्रसङ्गनिर्देशं व्याख्यायताम्।

उत्तरम्—श्रेष्ठी भोजनसमये उपस्थितेभ्यो याचकेभ्यो भोजनं दातुं स्वां पत्नीमुवाच। भोजनमादाय दातुं प्रस्थिता श्रेष्ठिपत्नी पुरो ज्वलन्नरकं ददर्श, श्रेष्ठी स्वयमपि तथैवापश्यत्, मारस्य दानान्निवर्त्तयत् वाक्यमपि स शुश्राव। अथापि स दातुं पुरः प्रतस्थे, ततश्च तन्नरकं तिरोहितं, तत्स्थाने कमलवनमुद्भूतमिति प्रसङ्गः।

अथ=श्रेष्ठिनि मारवचनं तिरस्कृत्य दातुमग्रेसरति, तस्य=श्रेष्ठिनः, पुण्यानुभावात्=धर्मप्रभावात्, अपङ्कजं=पङ्कं विनैव जातं पङ्कजं, तस्मिन्=नरकस्थाने श्रेष्ठिद्वारदेशे, उद्बभूव=प्रकटीबभूव। यत्=नरकस्थाने जातं पङ्कजं, शुक्लया=धवलवर्णया, केशरदन्तपङ्क्त्या=केशरात्मकेन दन्तराशिना अवज्ञया=तिरस्कारेण इव, अवजहास=हसतिस्म।

श्रेष्ठिनो दाननिष्ठारूपपुण्यबलात् तत्र नरके विनैव पङ्कं कमलमाविर्बभूव, तस्य कमलराशेः शुक्लकेशरराजिर्दन्तावलीव, तया च तत्रत्यं मारं धर्मात्प्रतिषेधन्तं जहासेवेति भावः । अवज्ञयेवेति हेतूत्प्रेक्षा ।

## अविषह्यश्रेष्ठि-जातकम्

(३८) इष्टार्थसम्पत्तिविमर्शनाशात् प्रीतिप्रबोधस्य विशेषहेतुः ।
यथार्थिनां दर्शनमास तस्य तथार्थिनां दर्शनमास तस्य ॥

व्याख्या क्रियताम् ।

उत्तरम्—अविषह्यश्रेष्ठिजातके तद्दानपरताप्रशंसायां श्लोकोऽयम् । यथा अर्थिनां=याचकानां कृते, तस्य=श्रेष्ठिनो, दर्शनं=साक्षात्कारः, इष्टार्थसम्पत्तिविमर्शनाशात्=अभिलषितधनाशङ्काभावात्, प्रीतिप्रबोधस्य=आनन्दोदयस्य, विशेषहेतुः=असाधारणं कारणमास=अभूत्, तथा तस्य=श्रेष्ठिनः कृतेऽपि, अर्थिनां दर्शनं प्रीतिप्रबोधस्य विशेषहेतुः आस । तत्रापि कारणं इष्टार्थसम्पत्तिविमर्शनाश एव, श्रेष्ठिनोऽपि हृदये इच्छापूर्तेराशङ्काया नाश एवानन्दे कारणम् । स्वाभिलषितधनप्राप्तेराशया यथा याचकास्तमालोक्य प्रासीदन्, तदैव एषां यथेष्टधनप्राप्तिराशा न विनश्यतु इति मन्यमानः श्रेष्ठी याचकान् द्रष्टुमीहतेस्मेति भावः ॥

(३९) (क) तस्यार्थिभिर्निर्ह्रियमाणसारे गृहे बभूवाभ्यधिकप्रहर्षः ।
विवेद स ह्युग्रधनानर्थान् अकारणक्षिप्रविरागिणोऽर्थान् ॥
(ख) भवन्ति लोकस्य हि भूयसार्था लोभाश्रयाद् दुर्गतिमात्रसार्थाः ।
परात्मनोरभ्युदयावहत्वादर्थास्तदीयास्तु बभुर्यथार्थाः ॥

अनयोर्व्याख्या विधीयताम् ।

उत्तरम्—अयं श्लोकः अविषह्यश्रेष्ठिजातककथाया उद्धृतः । अत्र श्रेष्ठिनो दातृतायाः प्रशंसा कृता ।

अर्थिभिः=याचकैः, निर्ह्रियमाणः=नीयमानः, सारो=मूल्यवान् पदार्थो, यस्मात् तादृशे याचकजननीयमानविभवे, गृहे,=भवने, अभ्यधिकप्रहर्षः= महानानन्दः, अभूत् । याचका यदा तस्य गृहात् भूयांसमर्थराशिं नीतवन्तस्तदा तद्गृहे आनन्दोऽधिकायते स्मेति तात्पर्यम् । तदानन्दप्रकर्षे कारणमुपन्यस्यति—विवेदेति—हि=यस्मात्, सः=श्रेष्ठी, अर्थान्=धनराशीन्, अकारणक्षिप्रविरागिणः—विनैव कारणं क्षिप्रं च=शीघ्रतया, विरागिणः=अपरागिणः, विरागस्वरूपान्, अनर्थान्=नानाविधांश्च क्लेशान्, उग्रधनान्=महतार्थराशिना

प्रेरिताम्, विवेद=जानातिस्म । अयमाशयः—श्रेष्ठिवरोऽसौ सर्वानप्यनर्थान् धनसञ्चयसम्भविनो जानातिस्म, धनानि च स्वभावतोऽपरागिवृत्तीनि शीघ्र-विनाशीनि च जानातिस्म, अत एव तस्य गृहे तदा महानानन्दो जायतेस्म, यदा याचकाः समागत्य तदीयं धनं गृहीत्वा निर्यान्तिस्म । धनसञ्चये दोषं मत्वा तदपाये हर्षप्रकर्षस्य कारणं स्वयमुपपाद्यत इति बोध्यम् ।

( ख ) भूयसा=प्रधानतया बाहुल्येन वा, अर्थाः=धनानि, लोभाश्रयात्=लोभमूलकत्वात्, दुर्गतिमात्रसार्थाः=केवलाया दुर्गतेः कारणानि, भवन्ति=जायन्ते । लोको लोभेन धनं सञ्चित्य दुर्गतिमात्रमामन्त्रयतीत्यर्थः । तद्व्यतिरिक्तश्चावर्तत तस्य श्रेष्ठिनो व्यवहार इत्युत्तरार्धेन व्यवस्थापयति—परात्मनोरिति—परस्य=अन्यस्य याचकस्य, आत्मनः=स्वस्य दातुश्च, अभ्युदयावहत्वात्=परमार्थसाधनत्वात्, तदीयाः=श्रेष्ठिवशगा, अर्थाः=धनानि, यथार्थाः=वास्तविकरूपेण सार्थकाः बभूवुः । ये लोभेन धनसञ्चयं कुर्वते तेषामर्था दुर्गतिमात्रमुपपादयन्ति, तैर्न याचकानामुपकारो जायते न वा तैः स्वामी एव परमार्थत उपक्रियते, क्षिप्रनाशित्वाद्धनानां, श्रेष्ठिनोऽस्यार्थस्तुदीयमानतया परानुपकुरुते, दानजन्यप्रीतिजनकत्वाद्दातुः स्वामिनश्चोपकारं सम्पादयतीति परमार्थभावेन तस्यैव धनत्वमिति तात्पर्यम् ॥

( ४० ) 'अथ तस्य महासत्त्वस्य यथाभिलषितैरक्लिष्टैः शिष्टोपचारविभूषणैर्विपुलैरर्थविसर्गैर्याचकजनं समन्ततः सन्तर्पयतः प्रदानौदार्यश्रवणाद्विस्मयावर्जितमनाः शक्रो देवेन्द्रः प्रदानस्थिरनिश्चयमस्य जिज्ञासमानः प्रत्यहं धनधान्यपरिच्छदजातं तत्तदन्तर्धापयामास । अपि नामायं विभवपरिक्षयाशङ्कयापि मात्सर्याय प्रतार्येत'

व्याख्यायतामयं सन्दर्भः ।

**उत्तरम्**—अथ=अनन्तरं, तस्य=श्रेष्ठिन इति विशेष्यम् । विशेषणानि आह—महासत्त्वस्येत्यारभ्य सन्तर्पयत इत्यन्तेन । महासत्त्वस्य=गभीरस्य महाप्राणस्य वा, यथाभिलषितैः=यथाप्रार्थितैः, अक्लिष्टैः=दानप्रवृत्ततया क्लेशमनावहद्भिः, शिष्टोपचारविभूषणैः=सत्कारपूर्वकव्यवहारभूषितैः, अर्थविसर्गैः=धनधान्यप्रदानैः, याचकजनं=प्रार्थिवर्गं, सन्तर्पयतः=तृप्तिं प्रापयतः । प्रदानौदार्यश्रवणात्=दानप्रवृत्तावुदारतां श्रुत्वा, विस्मयावर्जितमनाः=विस्मयाधीनहृदयः, अस्य=श्रेष्ठिनः, प्रदानस्थिरनिश्चयम्=दाने दृढं भावम्,

जिज्ञासमानः=परीक्षिष्यमाणः, प्रत्यहम्=अनुदिनं, धनधान्यपरिच्छदजातम्=धनं धान्यं परिच्छदजातमुपकरणान्तरसमूहं च, तत्तत् अन्तर्धापयामास=तिरोधापयितुं प्रवृत्तः। तत्र कारणमाह—विभवपरिक्षयाशङ्कया=धननाशभयेन, अपि नाम अयम्=श्रेष्ठी, मात्सर्याय प्रवर्त्तेत=कृपणः स्यात्।

तस्य श्रेष्ठिनो महाप्राणस्य यथाभिलषितं प्रदाय शिष्टव्यवहारं च कृत्वा याचकान् सन्तर्पयतः प्रदानदार्ढ्यं परीक्षितुं देवेन्द्रस्तस्य धनधान्यादितिरोधापयितुं प्रावर्त्तत, तथाकरणे तस्यायमाशय आसीद्यदयं धनापायशङ्कयापि दानान्निवर्त्तेति प्रकरणतात्पर्यम्।

(४१) यथा यथा तस्य विनेशुरर्थाः सूर्याभिमृष्टा इव तोयलेशाः।
तथा तथैतान् विपुलैः प्रदानैर्गृहात् प्रदीप्तादिव निर्जहार॥

व्याख्यायताम्पद्यमिदम्।

उत्तरम्—अस्य श्रेष्ठिनः अर्थाः=धनानि, सूर्याभिमृष्टाः तोयलेशाः=सूर्यकरशोषिता जलकणा इव, यथा यथा=यावत्या मात्रया, विनेशुः=नष्टानि अभवन्, तथा तथा विपुलैः प्रदानैः=भूयस्या दानप्रक्रियया, प्रदीप्तात्=अग्निना दह्यमानात्, गृहात्=भवनादिव, निर्जहार=बहिः कृतवान्। इन्द्रेण तत्परीक्षार्थं तिरोधाप्यमानेषु वित्तेषु स श्रेष्ठी समधिकभावेन धनानि विततार, तस्येयं दानप्रवृत्तिस्तादृशी बभूव, यथा कोऽपि धनिको गृहे वह्निना दह्यमाने तदवस्थितानि धनानि प्रयासेन बहिः क्षिपति। धनानि नश्यन्ति दृष्ट्वा समधिकायतेस्म श्रेष्ठिनो दानप्रवृत्तिः, यक्षगृहे दह्यमाने लोको धनं बहिः क्षिपति, तथैवायमपि नश्यतो धनराशेः सदुपयोगमिव कर्त्तुं प्रचुरमात्रया याचकेभ्यो तं दातुमुपचक्रम इति भावः।

( ४२ ) अथ शक्रो देवेन्द्रस्त्यागपरायणमेव तं महासत्त्वमवेत्य प्रक्षीयमाणविभवसारमपि विस्मिततरमतिस्तस्यैकरात्रेण सर्वं विभवसारमन्तर्धापयामासान्यत्र रज्जुकुण्डलाद्दात्राच्चैकस्मात्।

प्रसङ्गोऽयं विशद्य विव्रियताम्।

उत्तरम्—शक्रेण श्रेष्ठिपरीक्षायै धनानि क्रमशोऽन्तर्धाप्यमानानि दृष्ट्वापि यदा श्रेष्ठी ततो दानान्न न्यवर्त्तत, तदा परीक्षां कठिनयितुं शक्रः सर्वमपि धनमेकदैव तिरोधापयामास, केवलं रज्जुकुण्डलं दात्रं चैकमवशेषितवान् इत्यर्थः।

त्यागपरायणम्=दानतत्परम्। तं=श्रेष्ठिनम्, महासत्त्वम्=महाप्राणम्।

अवेत्य=ज्ञात्वा। प्रक्षीयमाणविभवसारम्=हीयमानधनराशिम्। विस्मित-तरमतिः=अत्याश्चर्यचकितः। अन्तर्धापयामास=तिरोऽधापयत्।

क्रमशः क्षीयमाणविभवोऽयं दानात् न निवर्त्तेत इति कठिनपरीक्षार्थं शक्रस्त-दीयं समस्तं विभवराशिमेकदैव तिरोहितं व्यधात्, केवलं रज्जुकुण्डलं दात्रं चैकं जीविकार्थं अवशेषितवान् इति भावः।

( ४३ ) यदि तावत्केनचिद्याचितुमनुचितवचसा स्वविक्रमोपार्जित-जीविना मद्गृहे प्रणय एवं दर्शितः। सूपयुक्ता एवमर्थाः। अथ त्विदानीं मद्भाग्यदोषादुच्छ्रयमसहमानेन केनचिदनुपयुक्ता एव विद्रुतास्तत्कष्टम्।

व्याख्यया स्पष्टीक्रियतामयं प्रसङ्गः।

उत्तरम्—धनानि शक्रप्रभावेण तिरोहितानि ज्ञात्वा दानी यथा शोचितवां-स्तस्यैव वर्णनमत्र कृतं बोध्यम्।

मम गृहे वर्त्तमानपूर्वस्य सम्प्रति तिरोभवतो धनस्य विषये द्विधा सम्भावना विद्यते, केनचिद्याचनाभ्यासरहितेन जनेन तदपहृतं स्यात् इति प्रथमः कल्पः। अथवा मम भाग्यदोषात् मम धनिकत्वम्प्रति मत्सरभृता केनचित् विनैव उपयोगं कुत्रचित् नीतं तदिति द्वितीयः कल्पः।

याचितुं=मह्यं देहीति प्रार्थयितुमनुचितवचसा=अनभ्यस्तवाचा, स्वविक्रमो-पार्जितजीविना=स्वोपार्जनद्वारैव जीवननिर्वाहपरेण, मद्गृहे प्रणयः=मम गृहे स्नेहः, यदि कश्चिद्याचितुं न शक्नुवन् स्वोपार्जितेनैव जीवनं चालयन् मम धनम-पहृतवान्, तदा सूपयुक्ताः=साधुसंजातोपयोगा एव मम अर्थाः। प्रथमः कल्पो ममाभिमत इत्यर्थः। यदि पुनर्मम अभाग्येन मदीयां समृद्धिं न सोढुं पारयन् कश्चन विनैव आवश्यकतां मम धनमपनीतवान्, तस्य तत्र सूपयुक्तत्वाभावात् कष्टकरमिदमिति द्वितीयकल्पः शोच्य इति भावः।

(४४) प्रदानसत्कारसुखोचिताश्चिरं विविक्तमर्थैरभिगम्य मद्गृहम्।
कथं भविष्यन्ति नु ते ममार्थिनः पिपासिता शुष्कमिवागता ह्रदम्॥

व्याख्या विधीयताम्।

उत्तरम्—ये मम अर्थिनः चिरं प्रदानसत्कारसुखोचिताः—प्रदानस्य सत्का-रस्य च यत्सुखं तत्रोचिताः=साभ्यासाः, ये याचकाः पूर्वं मद्गृहमागत्य दानम-लभन्त सदक्रियन्त च, दानसत्कारयोर्ये अभ्यस्ता जातास्ते याचकाः अधुना धनराशेस्तिरोधाने अर्थैः=धनैः, विविक्तं=शून्यं, मद्गृहम् अभिगम्य कथं नु-भविष्यन्ति, उपमयाऽर्थं प्रमाणयति—पिपासिताः=तृषायुक्ता, यथा शुष्कं

ह्रदमुपेत्य क्लिश्यन्ते, तथैव मम याचकानां सदा मया दानेन सत्कृतानां सम्प्रति तदशक्तौ स्थितिर्भविष्यति यथा शुष्कं ह्रदमागतानां पिपासितानां स्थितिर्भवतीति भावः ॥

(४५) (क) सुहृन्मनस्तापकरीमवस्थामिमामुपेतस्त्वमतिप्रदानैः ।
न दस्युभिर्नैव जलानलाभ्यां न राजभिः संह्रियमाणवित्तः ॥
(ख) विद्युल्लता नृत्तचले धने च साधारणे नैकविघातहेतौ ।
दाने निदाने च सुखोदयानां मात्सर्यमार्यः किमिवाश्रयेत ॥

व्याख्या विधीयताम् ।

उत्तरम्—( क ) श्रेष्ठी धने तिरोहिते रज्जुं दात्रं च तृणान्याहृत्य विक्रयेण प्राप्तं धनं याचकसत्कारे नियोजयतीति दृष्ट्वा शक्रस्तं परीक्षायां दानाद्विरमयितुमाह—सुहृदिति—त्वम् इमाम्=वर्त्तमानाम्, सुहृन्मनस्तापकरीं=तव सुहृदां चित्तेषु सन्तापजननीम् अवस्थाम्, अतिप्रदानैः=अतिशयदानद्वारा उपेतः । ननु निर्धनतायां कारणान्तरमपि शक्यसम्भवमित्याह—न दस्युभिरिति—न दस्युभिः=पाटच्चरैः, न जलानलाभ्यां=वारिणा वा, न राजभिः वा संह्रियमाणवित्तः=अपहृतधनस्त्वमिमां खेदकरीं दशामुपेतोऽसि । तवेयं त्वन्मित्रखेदकरी स्थितिरतिप्रदानजन्या, तव धनं न लुण्ठाकैर्हृतं न जलेन अनलेन वा हृतं, न वा राज्ञाऽपहृतं, केवलं दत्त्वैव त्वं निःस्वः संजात इति निवर्त्तस्व दानव्यसनादिति प्रतारणावाक्याशयः ॥

( ख ) इन्द्रेण अपहृतविभवो बहुधा प्रतारितोऽपि च श्रेष्ठी स्वां दृढनिश्चयतां प्रकाशयन्नाह—विद्युल्लतेति०—धने=विभवे, विद्युल्लतानृत्तचले=चपलाचमत्कारवच्चपले, साधारणे=तुच्छे, नैकविघातहेतौ=नानाविधविपत्तिकारणे च सति, सुखोदयानां=सुखसम्पदां, निदाने=कारणे, च प्रथिते दाने कः मात्सर्यम्=कृपणताम्, आश्रयेत हे आर्य ! ।

हे आर्य ! धनं विद्युल्लतानृत्तचलं, तदतितुच्छं साधारण्यात्, धनं नानाविपत्तिस्थानम्, दानं पुनस्सर्वसुखनिदानम्, अस्यां स्थितौ को जनः कृपणतामाश्रयेत्, न कोऽपीति वृथा त्वत्कर्तृकं मत्प्रतारणमिति तात्पर्यम्

(४६) (क) स्वबुद्धिविस्पन्दसमाहितेन वा यशोनुकूलेन कुलोचितेन वा ।
समृद्धिमाकृष्य शुभेन कर्मणा सपत्नतेजांस्यभिभूय भानुवत् ॥

(ख) अथ प्रदाने प्रविजृम्भितक्रमः सुखेन वा नैति जनस्य वाच्यताम् ।
अजातपक्षः खमिवारुरुक्षया विघातभाक् केवलया नु दित्सया ॥

यथाप्रसङ्गं व्याख्या क्रियताम् ।

**उत्तरम्**—( क ) स्वबुद्धिविस्पन्दसमाहितेन = निजबुद्धिबलप्राप्तेन, यशोनुकूलेन = यशस्करेण, कुलोचितेन = स्ववंशमर्यादायुतेन वा ( प्रकारेण ), शुभेन कर्मणा = उचितेन प्रकारेण, समृद्धिमाकृष्य = धनं प्राप्य, भानुवत् सपत्नतेजांसि अभिभूय ( दानपरो भवेदिति प्रसङ्गः ) । स्वबुद्धिवैभवेन धनमर्जयित्वा यदि दानं करोति तदा तत्तस्य शोभाकरं त्वं तु तथा न करोषि, तदिदं तव चेष्टितं नोपयुक्तमिति भावः ।

( ख ) अथ = बुद्धिबलेन धनमर्जयित्वा, प्रदाने = दानविधौ, प्रविजृम्भितक्रमः = वर्द्धमानप्रयासः, सुखेन = अनायासेन, जनस्य वाच्यताम् = निन्दां, न एति । अर्जितधनस्य धनदानप्रवृत्तिर्न निन्दनीया भवति, त्वं तु तथा नासीत्याह—अजातपक्ष इति—अजातपक्षः = अरूढपक्षः, पक्षी यथा खम् आरुरुक्षया विघातभाक् = विपत्तिभाजनं भवति, तथैव त्वमपि केवलया दित्सया = दानेच्छया, विघातभाक् स्या अतो निवर्त्तस्व दानात्, तदिदं शक्रेण क्रियमाणं श्रेष्ठिप्रतारणवाक्यम् ॥

( ४७ ) ( क ) त्रातुं लोकान्यस्तु जरामृत्युपरीता-
नप्यात्मानं दित्सति कारुण्यवशेन ।
यो नास्वादं वेत्ति सुखानां परदुःखैः
कस्तस्यार्थस्त्वद्गतया स्यादपि लक्ष्म्या ॥

( ख ) सम्पत्तिरिव वित्तानामध्रुवा स्थितिरायुषः ।
इति याचनकं लब्ध्वा न समृद्धिरवेक्ष्यते ॥

व्याख्या विधीयताम् ।

**उत्तरम्**—अविषह्यश्रेष्ठिजातकप्रकरणे शक्रेण बहुधा बोधितोऽपि दानकर्मणोऽनिवर्त्तमानः श्रेष्ठी स्वां दाननिष्ठामविचलां वञ्चयितुमशक्यां चाह—त्रातुमिति—जरसा = वार्धकेन, मृत्युना = मरणेन च, परीतान् = धृतान्, जरामृत्युक्लेशभाजो लोकान् त्रातुं = रक्षितुं, कारुण्यवशेन = दयाप्रेरणया, आत्मानं = स्वं कायमपि, दित्सति = दातुमिच्छति, यः परदुःखैः = अन्यजनकष्टैः ( दृश्यमानैः ), सुखास्वादं = सुखस्य स्वादं, सुखं कीदृशं भवतीति रहस्यं न वेत्ति = न जानाति, तस्य = जनस्य, त्वद्गतया = त्वदधीनया, इन्द्रस्वामि-

कयापि, लक्ष्म्या कः अर्थः=प्रयोजनं स्यात् । योऽन्यान् जनान् जरामृत्युपरीतानालोक्य दानं कर्त्तुमिच्छति, परदुःखेन क्लिश्यमानस्य यस्य सुखास्वादोऽपि नैव भवति, स शक्रगतायामपि सम्पत्तौ न मनोरथं रक्षतीति भावः ।

( ख ) वित्तानां=धनधान्यादीनां, सम्पत्तिः=समृद्धिरिव, आयुषः=जीवनकालस्य, स्थितिः=स्थापिता, अध्रुवा=चपला, भवतीति शेषः । यथाऽऽयुश्चलं तथैव धनान्यपि चलानि सन्तीति हेतोः—याचनकं=प्रार्थिनं, लब्ध्वा सम्पत्तिः न अपेक्ष्यते । धनमपि चलं जीवनमपि चलमिति स्थितौ प्रार्थिनं लब्ध्वा दानमेव धनोपयोगः, उपभोगाय तद्रक्षणं तु धनायुषोरुभयोश्चलतयाऽसम्भाव्यसिद्धिकतया अकर्त्तव्यमवैति तात्पर्यम् ।

( ४८ ) न चात्र चित्रं परदुःखदुःखिनः कृपावशाल्लोकहितैषिणस्तव ।
हिमावदातः शिखरीव वायुना न यत्प्रदानादसि कम्पितो मया ।।

सप्रकरणनिर्देशं व्याख्यायताम् ।

**उत्तरम्**—यदा अविषह्यश्रेष्ठी शक्रेण प्रतार्यमाणोऽपि दित्साया न न्यवर्त्तत, तदा शक्रस्तं स्तौति—न चात्रेति ।

अत्र=मया प्रतारणे प्रक्रान्तेऽपि त्वं न चलितोऽत्र विषये, चित्रमाश्चर्यं न, तव लोकहितैषिणः=लोकशुभेच्छोः, कृपावशात् परदुःखवर्त्तिनः=कृपया परगतान्यपि दुःखानि स्वदुःखानीव मत्वा तदपासने प्रवृत्तौ न किमपि चित्रमित्यर्थः, तत्र दृष्टान्तमाह—यथा हिमावदातः=प्रालेयधवलः, शिखरी=पर्वतो, वायुना न कम्प्यते, तथैव त्वमपि मया प्रदानात्=दानकर्मणोः, न कम्पितोऽसि=चलयितुं शक्तोऽसि इति । पर्वतवायुदृष्टान्तेन दृढाशयस्य दातुरचलनिश्चयता ध्वन्यते ।

## शशजातकम्

( ४९ ) कस्मिंश्चिदरण्यायतनप्रदेशे मनोज्ञवीरुत्तृणतरुगहननिचिते पुष्पफलवति वैदूर्यनालशुचिवाहिन्या सरिता विभूषितपर्यन्ते मृदुशाद्वलास्तरणसुखसंस्पर्शनदर्शनीयधरणीतले तपस्विजनविचरिते बोधिसत्त्वः शशो वभूव ।

व्याख्या कार्या ।

**उत्तरम्**—शशजातके आदौ प्रसङ्गोऽयमागतः ।

कस्मिश्चित् अरण्यस्य=वनस्य, आयतनमेव=विस्तार एव प्रदेशस्तत्र,

विस्तृतारण्यभागे इत्यर्थः, मनोज्ञैः तृणैः=घासैः, वीरुद्भिः=लताभिः, तरुगहनं =घनवृक्षावली च, तैः निचिते=व्याप्ते, पुष्पफलवति=पुष्पैः फलैश्च युवते, वैदूर्यनालो=हरितमणिः, तद्वत् शुचिवाहिन्या=पवित्रप्रवाहया, सरिता= कदाचन नद्या, विभूषितपर्यन्ते=व्याप्तैकदेशे, मृदुना=कोमलेन, शाद्वलास्तरणेन =आस्तीर्णलघुघासेन, सुखसंस्पर्शनं=कोमलहृद्यस्य स्पर्शम्, दर्शनीयं=दृष्टि सुखकरञ्च, धरणीतलं=भूभागो यत्र, तस्मिन् तपस्विजनविचरिते=तपस्या-रतजनसञ्चारशीले ( वने ), बोधिसत्त्वो=बुद्धत्वप्राप्तेः पूर्वतनावस्थः, शशो नाम जन्तुर्बभूव । स्वभाववर्णनया रमणीयोऽयं गद्यभागः ।

( ५० ) स्वचर्माजिनसंवीतः स्वतनूरुहवल्कलः ।
मुनिवत्तत्र शुशुभे तुष्टचित्तस्तृणाङ्कुरैः ।

व्याख्यायतां पद्यमिदम्

उत्तरम्—स्वं चर्मैवाजिनं=तपस्विजनधार्यं चर्म, तेन संवीतः=आवृततनुः, स्वतनूरुहाणि=स्वरोमाण्येव, वल्कलानि=वृक्षत्वचो यस्य तादृशः, तृणाङ्कुरैः= तृणाग्रभागैस्तुष्टचित्तः=स शशो बोधिसत्त्वः तत्र=वने, मुनिवत्=मुनिरिव, शुशुभे=अशोभत । मुनिर्यथाऽजिनधरः वल्कलवान् यथालाभतुष्टश्च वने विचरति, तद्वदयं शशोऽपि स्वचर्मणैवाजिनधरः स्वरोमभिरेव च वल्कलवान् यदृच्छोपनततृणाङ्कुरसन्तुष्टहृदयस्तत्र वने व्यचरदिति सादृश्येनोपमा ।

( ५१ ) तिर्यक्स्वभावविमुखाश्च प्राणिषु दयानुवृत्त्या लौल्यप्रशमा-द्विस्मृतस्तेयप्रवृत्त्या धर्माविरोधिन्या च यशोऽनुवृत्त्या पटुविज्ञानत्वा-द्विनियमधीरया च सज्जनेष्टया चेष्टया देवतानामपि विस्मयनीया बभूवुः ।

प्रसङ्गनिर्देशपूर्वकं व्याख्यायतामेष सन्दर्भः ।

उत्तरम्—शशजातके बोधिसत्त्वस्य शशात्मना वने संजातस्य मित्राणां सहवासिनाञ्च उद्रश्रृगालवानराणां वर्णनपरोऽयं गद्यभागः । अयमेव प्रसङ्गोऽत्र ।

तिरश्चां=पशुपक्षिणां, यः स्वभावः=परदुःखानभिज्ञता, तद्विमुखास्ततो निवृत्ताः, प्राणिषु=जीवमात्रेषु, दयानुवृत्त्या=दयालु-व्यवहारेण, लौल्यप्रशमात् =चञ्चलतानिवृत्तेः, विस्मृता=ध्यानादपगता, या स्तेयप्रवृत्तिः=चौर्यरुचिः तया, धर्माविरोधिन्या=धर्मानुकूलया च, यशोऽनुवृत्त्या=धर्माभिमुख्येन, पटु-विज्ञानत्वात्=सर्वविषयकज्ञानशालित्वात्, विनियमधीरया=निग्रहप्ररया,

सज्जनेष्टया=सज्जनकाम्यया, चेष्टया=वृत्त्या च, देवानामपि विस्मयनीयाः =विस्मयजनका बभूव ।

बोधिसत्त्वे शशशरीरभागि तस्य उद्रश्रृगालवानरास्त्रयः सखायोऽभूवन्, ते पशुपक्षिस्वभावभिन्नस्वभावाः, प्राणिषु सततं दयालवः, अचाञ्चल्यात् चौर्यविरताः, धर्मानुकूले यशसि निरताः, पटुविज्ञानाः, संयतया मुनिभिरपि काम्यमानया चेष्टया च देवानामपि मानसेषु कथममी अमानुषाः सन्तोऽपि मुनिवद् व्यवहरन्तीति विस्मयं जनयन्तिस्मेति भावः ।

(५२) द्वितीयेऽहनि गगनतलमध्यमभिलङ्घमाने पटुतरकिरणप्रभावे सवितरि प्रस्फुलितमरीचिजालवसनासु भास्करातपविसरावगुण्ठितास्वनालोकनक्षमासु दिक्षु संक्षिप्यमाणच्छायेष्वभिवृद्धचीरीविरावोन्नादितेषु वनान्तरेषु विच्छिद्यमानपक्षिसम्पातेषु घर्मक्लमापीतोत्साहेष्वध्वगेषु शक्रो देवानामधिपतिर्ब्राह्मणरूपो भूत्वा मार्गप्रनष्ट इव क्षुत्तर्षश्रमविषाद दीनकण्ठः सस्वरं विरुदन्नातिदूरे तेषां विचुक्रोश ।

प्रसङ्गपूर्वकं व्याख्यायतामेष सन्दर्भः ।

उत्तरम्—पोषधव्रतोपयुक्ते पर्वणि व्यतीते तत्परेऽहनि तेषां दानप्रवृत्त्या प्रसन्नेषु सर्वेषु देवेषु देवेन्द्रस्तत्र ब्राह्मणवेशो विस्मृतमार्गः पान्थ इवोपस्थितः । स एवात्र प्रसङ्गः ।

द्वितीयेऽहनि=पोषधपर्वपरदिवसे, पटुतरकिरणप्रभावे=तीक्ष्णकरे, सवितरि=सूर्ये, गगनमध्यम्=आकाशमध्यदेशम्, अभिलङ्घमाने=अधितिष्ठति, मरीचिजालवसनासु=किरणमालावस्त्रावृतासु, सूर्यकरपरिगृहीतासु, भास्वरेण=दीप्तेन, आतपेन=सूर्यरोचिषां, विसरेण=समूहेन, अवगुण्ठितासु=परिवृतासु, अत एव अनालोकनक्षमासु=द्रष्टुमयोग्यासु, दिक्षु=दिशासु, संक्षिप्यमाणच्छायेषु=ह्रासं व्रजन्त्यां छायायां सत्याम्, अभिवृद्धेन=वृद्धिगतेन, चीरीविरावेण=झिंगुरशब्देन, उन्नादितेषु=सशब्देषु, वनान्तरेषु विच्छिद्यमानपक्षिसंयोगेषु=पक्षिषु पृथग्भूतेषु, अध्वगेषु=पान्थेषु च, घर्मक्लमेन=आतपबाधया, पीतोत्साहेषु=निवृत्ताग्रसरणाध्यवसायेषु, ब्राह्मणरूपो देवानामधिपतिः शक्रो, मार्गप्रनष्टः=विस्मृतपथः पथिक इव, क्षुधा तर्षेण=पिपासया च यो विषादः=क्लेशस्तेन दीनकण्ठः=आर्त्तकण्ठः, सस्वरं प्ररुदन्=मुक्तकण्ठं विलपन्, तेषां=वानरश्रृगालादीनां शशसुहृदां, नातिदूरे=समीपे, विचुक्रोश=आर्त्तनादं चकार । पोषध-

परदिने वियन्मध्यमाक्रामति भास्करे दिशासु तन्मरीचिजालावृतासु तरूणां छायायां संक्षिप्यमाणायां वनान्तरेषु चीरीविरावमुखरेषु भ्रष्टमार्गः पथिक इव क्षुत्तृड्व्याकुलीभूतः शक्रो तेषां नातिदूरदेशे करुणं विललापेति तात्पर्यम् ।

(५३) मीनारिभिर्विस्मरणोज्झिता वा त्रासोत्सुका वा स्थलमभ्युपेताः ।
खेदप्रसुप्ता इव सप्तमत्स्या लब्धा मयैतान्निवसेह भुक्त्वा ॥

प्रकरणप्रदर्शनपूर्वकं व्याख्यायताम् ।

**उत्तरम्**—ब्राह्मणपथिकरूपेण समुपस्थाय खिन्नमनसे बुभुक्षिताय शक्राय शशसुहृदा उद्रेण मत्स्या भोजनाय समर्पिता इति तत्प्रसङ्गे उद्रस्य कथनमिदम् ।

मीनारिभिः=धीवरैः, विस्मरणोज्झिताः=विस्मृत्य तटे त्यक्ताः, त्रासोत्सुका=अस्मान् धीवरा जालेन समाहरिष्यन्तीति भयप्रेरिता वा सन्तः, स्थलं=जलाशयतटभुवमभ्युपेताः=आसादितवन्तः, खेदप्रसुप्तास्तरोपगमक्लेशसुप्ता इव, मया अमी सप्तमत्स्या=तत्संख्यका मीना लब्धाः, एतान्=मयोपह्रियमाणान् सप्तमत्स्यान्, भुक्त्वा=खादित्वा, इह=वने, निवस=वासं कुरु । उद्रस्य कथनस्यायमाशयः—धीवरा यदा जालेन मत्स्यान् गृह्णन्ति तदा कतिचन मत्स्यास्तटे तैर्विस्मर्यन्ते, त एवेमे सप्तमत्स्याः सन्ति, अथवा जालपातभयेन स्थलमागता भीताः सन्ति, अमी तटागमखेदेन सुप्ता इव अचलाः सन्तो मया गृहीतास्तानेतान्मयोपह्रियमाणान् भुक्त्वाऽत्र वने निवसेति तत्कथनम् ।

(५४) यदस्ति यस्येप्सितसाधनं धनं स तन्नियुङ्क्तेऽर्थि समागमोत्सवे ।
न चास्ति देहादधिकं च मे धनं प्रतीच्छ सर्वस्वमिदं यतो मम ॥

वक्तृबोद्धव्यनिर्देशपूर्वकं स्पष्टीकुरुत पद्यमिदम् ।

**उत्तरम्**—शशजातके भ्रष्टमार्गपथिकवदुपस्थिताय ब्राह्मणरूपाय क्षुत्तृड्व्याकुलाय च शक्राय स्वशरीरं समर्पयतः शशस्य कथनमिदम् ।

यदस्तीति—यस्य यत् ईप्सितसाधनं=मनोरथोपपादकं, धनं=धान्यादि, अस्ति=भवति, स अर्थिसमागमोत्सवे=याचकजनोपस्थितिरूपे शुभावहे समये, तत्=स्वं धनं, नियुङ्क्ते=उपस्थापयति, याचकाय प्रदाय स्वं धनं सफलीकरोति, मे=मम शशस्य, देहात्=शरीरात्, अधिकमन्यत् उत्कृष्टं, धनं च नास्ति=न विद्यते, यतो मम सर्वस्वमिदं शरीरम्, तदिदं प्रतीच्छ=गृहाण । याचकजनोपयुक्तं हि सर्वः सफलं मन्यते, मम च शरीरमेव परमं धनं, तद्भवान् मम शरीरमेव उपभुज्य मां सफलधनं करोत्वित्यभिप्रायः ।

(५५) त्यक्तं बतानेन यथा शरीरं निःशङ्कमग्न्यातिथिवत्सलेन।
निर्माल्यमप्येवमकम्पमाना नालं परित्यक्तुमधीरसत्त्वाः॥

सप्रसङ्गमेतद् विव्रियतां पद्यम्।

**उत्तरम्**—शशेन बुभुक्षिताय शक्राय ब्राह्मणपथिकभावेनोपस्थिताय स्वं शरीरमुपहृतमग्नौ प्रज्वलति क्षिप्तमिति तदीयं दातृत्वं प्रशंसतः शक्रस्योक्तिरियम्।

त्यक्तमिति—बतेति=सोल्लुण्ठनं खेदातिशयव्यञ्जकम्, अतिथिवत्सलेन =अतिथिं प्राप्य प्रसीदता, अनेन=शशेन, निश्शङ्कं=शरीरपातेऽपि निर्व्यथेन दृढेन च, यथा=येन प्रकारेण, शरीरं=स्वं वपुः त्यक्तं=वह्नौ विसृज्यमानं कृतम्, अतिथिः प्रीयतां कामं मम शरीरं विपद्यतामिति दृढमतिना अनेन शशेन यथा स्वं वपुरग्नौ निक्षिप्तं, एवं तथा अकम्पमानाः=निश्चलहृदयाः सन्तः, अधीरसत्त्वाः=अदृढमानसाः, अन्ये केचनापि निर्माल्यम्=उपभुक्तमुच्छिष्टं वा, अपि परित्यक्तुं=विस्रष्टुं, नालं=न क्षमाः समर्थाः। शशेन यथा अशङ्कभावेन स्वातिथिसत्काराय निजं शरीरं वह्नौ क्षिप्तं तथा अपरे अदृढसत्त्वाः प्राणिनो निर्माल्यमपि हातुं नोत्सहेरन्नतो धन्योऽयमतिथिप्रियः शश इति पिण्डार्थः।

## अगस्त्यजातकम्

(५६) स यथाक्रमं श्रुतिस्मृतिविहितानवाप्य जातकर्मादीन् संस्कारानधीत्य साङ्गान् वेदान् कृत्स्नं च कल्पं व्याप्य विद्यायशसा मनुष्यलोकं गुणप्रियैर्दातृभिरभ्यर्थ्य प्रतिगृह्यमाणविभवत्वात् परां धनसमृद्धिमवाप॥

प्रसङ्गनिर्देशपूर्वकं व्याख्यायताम्।

**उत्तरम्**-पूर्वकाले भगवान् बोधिसत्त्वो ब्राह्मणकुले सञ्जातः। तस्यैवागस्त्यनाम्ना प्रथमानस्य बाल्यदशावर्णनमिदम्।

स=बालोऽगस्त्यः, यथाक्रमं=क्रमशः, श्रुत्या=वेदेन, स्मृतिभिश्च= मन्वादिप्रणीताभिः, विहितान्=निर्दिष्टान्, जातकर्मादीन्=जातकर्मचौलमौञ्जी प्रभृतीन्, संस्कारान्=बैजिकगार्भिकपापापनोदकान् संस्कृतिविशेषानवाप्य=पित्रादिभिः क्रियमाणानधिगत्य, साङ्गान्=व्याकरणाद्यङ्गविद्यायुक्तान्, वेदान्=यजुःसामादीन्, अधीत्य=पठित्वा, कृत्स्नं=समग्रं, कल्पं=तन्नामकं शास्त्रञ्च, विद्यायशसा=विद्याप्रभवकीर्त्या, मनुष्यलोकं व्याप्य=संसारं परिच्छिद्य, गुणप्रियैः=गुणस्निग्धैः, दातृभिः=याचकैः, अभ्यर्थ्य=याचित्वा,

प्रतिगृह्यमाणविभवत्वात्=गृहीतधनत्वात्, परां धनसमृद्धिम्=सम्पदम् अवाप। सोऽगस्त्यो यथाक्रमं कृतसंस्कारः वेदान् कल्पं च यथावदधीत्य यशोव्याप्तसंसारः सन् याचकेभ्यो धनं वितरन्नपि पुण्यप्रभावादधिकायमानविभव आसीदिति भावः।

(५७) विद्वत्तया तस्य यशः प्रकाशं तत्त्यागशौर्यादधिकं चकाशे।
निशाकरस्येव शरद्विशुद्धं समग्रशोभाधिककान्तिबिम्बम्॥

स्फुटं व्याख्यायताम्।

**उत्तरम्**—विद्वत्तया=विद्यावैभवेन, प्रकाशं=विकासि, तस्य=अगस्त्यस्य, यशः=कीर्त्तिः, तत्त्यागशौर्यात्=तस्य त्यागे प्रवृत्तत्वात् त्यागमाहात्म्यात्, अधिकं=प्रचुरं, चकाशे=दिदीपे। तत्रोपमामुपन्यस्यति—निशाकरस्येति—यथा निशाकरस्य=चन्द्रस्य, बिम्बं=मण्डलम्, शरद्विशुद्धं=शरदा परिमार्जितं सत्, समग्रशोभाधिककान्ति—समग्राभिः=वर्द्धिताभिः, शोभाभिः=रामणीयकैः, अधिककान्ति जायते तथैव। अयमाशयः—यथा चन्द्रमण्डलं स्वतो भासायुतं सदपि शरत्संयोगेन वर्द्धमानद्युति जायते, तथैव विद्याभास्वरमपि अगस्त्यस्य यशो दानमाहात्म्येन प्रचुरकान्ति समजायतेति॥

(५८) स हि गृहिजनसंसर्गं प्रविवेकसुखप्रमाथिनं व्यासङ्गविक्षेपान्तरायकरमबहुमन्यमानः प्रविवेकाभिरामतया दक्षिणसमुद्रमध्यावगाढमिन्द्रनीलभेदाभिनीलवर्णैरनिलबलाकलितैरूर्मिमालाविलासैराच्छुरितपर्यन्तं सितसिकतास्तीर्णभूमिभागं पुष्पफलपल्लवालङ्कृतविटपैर्नानातरुभिरुपशोभितं विमलसलिलाशयाप्रतीरं काराद्वीपमध्यासनादाश्रमपदश्रिया संयोजयामास।

व्याख्यायताम्।

**उत्तरम्**—अगस्त्यस्य त्यागवृत्त्या प्रेरितस्य दक्षिणसागरतटे आश्रमग्रहणवृत्तं वर्णयति—सहीत्यादिना। सः=अगस्त्यः, गृहिजनसंसर्गं=गृहवासिजनसम्पर्कं, प्रविवेकसुखप्रमाथिनं=रहोवासजन्यानन्दविरोधिनम्, व्यासङ्गो=गृहासक्तिः, विक्षेपो=गृहसम्पर्कजन्यः ममत्वोदयश्च, स एवान्तरायो=विवेकविघ्नस्तत्करम्=आसक्तिं ममतां च, जनयन्तमित्यर्थः। अबहुमन्यमान=अनाद्रियमाणः। प्रविवेकाभिरामतया=एकान्तरम्यतया। दक्षिणसमुद्रमध्यावगाढम्=दक्षिणसागरमिलितम्। इन्द्रनीलभेदाभिनीलवर्णैः=इन्द्रनीलमणिश्यामलैः। अनिलबलाकलितैः=वायुवेगानीतैः। ऊर्मिमालाविलासैः=तरङ्गराशिभिः।

आच्छुरितपर्यन्तम् = व्याप्तभागम् । सितसिकतास्तीर्णभूमिभागं = स्वच्छबालुकापरिगतभूमितलम् । पुष्पैः = सुमनोभिः, फलैश्च अलङ्कृता विटपाः = शाखाः, येषां तादृशैः, तरुभिः उपशोभितं = भूषितं, विमलानां = स्वच्छानां, जलाशयानां सरसां, प्रतीरं = तटो, यत्र तादृशम् । काराद्वीपम् = तन्नामकं द्वीपदेशम्, अध्यासनात् = स्वेनाश्रयणात्, आश्रमपदश्रिया संयोजयामास । उपरि वर्ण्यमानं काराद्वीपं स्वाश्रमेण योजयामासेति भावः ।

( ५९ ) न क्वचिद् दुर्लभा वृत्तिः सन्तोषनियतात्मनाम् ।
कुत्र नाम न विद्यन्ते तृणपर्णजलाशयाः ॥

प्रसङ्गप्रदर्शनपूर्वकं व्याख्यायताम् ।

**उत्तरम्**—अगस्त्यो दक्षिणसागरतटे आश्रमं निर्माय एकान्तसुखार्थं वसति स्म । तस्यागपरीक्षणाय तदुपयोगि वन्यं फलमूलादिकं शक्रस्तिरोधापयामास । तथापि सः अविचल एव पर्णपाकेन वर्त्तमानः स्थित इति प्रसङ्गे पद्यमिदम् ।

क्वचित् = कुत्रापिचित्, वृत्तिः = जीवनरक्षौपयिकवस्तुप्राप्तिः, न दुर्लभा = न दुरापा, यतः कुत्र नाम = क्व नु नाम, तृणानि = घासाः, पर्णानि = वृक्षपत्राणि, जलाशयाश्च न सन्ति, सर्वत्रैव घासतरुपत्रजलाशयानां सद्भावस्य निश्चितत्वे तैरपि जीवनयात्रानिर्वाहसम्भवे क्वचिदपि जीविका नास्तीति कथनमयथार्थमेवैति भावः ।

( ६० ) दित्साप्रहर्षविकसन्नयनास्य शोभः
स्निग्धैमनःश्रुतिसुखैरभिनन्द्य वाक्यैः ।
कृच्छ्रोपलब्धमपि तच्छ्रपणं समस्तं
तस्मै ददौ स्वयमभूच्च मुदेव तृप्तः ॥

प्रकरणप्रदर्शनपूर्वकं व्याख्यायताम् ।

**उत्तरम्**—दित्सया = दानेच्छया यः, प्रहर्षः = परमानन्दः, तेन विकसन्ती = प्रफुल्ला, नयनयोरास्यस्य = मुखस्य च, शोभा यस्य तथाभूतः, स्निग्धैः = प्रेमप्रकाशकैः, मनसः श्रुतेः = कर्णस्य, सुखैः = सुखकरैः, वाक्यैः = वचनैः, तम् = अर्थिनम्, अभिनन्द्य = प्रशंस्य, कृच्छ्रोपलब्धम् = महता कष्टेन प्राप्तम्, अपि तच्छ्रपणं = तमात्मनः ते कृतं पाकम्, तस्मै = याचकाय ददौ, स्वयं च मुदा = दानजनितेन हर्षेणैव, तृप्तः = सन्तुष्टोऽभूत् ।

तपस्यानिरतोऽगस्त्यो वने लभ्यं फलमूलादि पक्त्वाऽभ्यवहरति, एकदा नित्यकर्मणो निवृत्तः स याचकमेकमुपस्थितमपश्यत्, तस्यां स्थितौ प्रसादामलया

वाचा तमभिनन्द्य तं पाकं स तस्मै दत्तवान् स्वयं च दानजनितहर्षेण तृप्तिं तामविन्दत, यां भोजने कृतेऽपि अलभ्यैवासीदिति भावः।

( ६१ ) तेनान्नपानविधिना स मुनिर्महर्षीन्
संतर्पयन् मुदमुदारतरामवाप।
वृत्त्या च तापसजनोचिततयाऽभिरेमे
ध्यानाप्रमाणनियमेन शमेन चैव ॥

व्याख्यायताम्।

**उत्तरम्**—प्रसद्य शक्रोऽगस्त्याय बहूनि अन्नपानादीनि प्रायच्छत् तानि स स्वयमनुपभुज्य याचकानयाचकांश्च वनवासिनो महर्षीन् सन्तर्प्य परां मुदमवापत्। एष प्रसङ्गः।

मुनिः=सोऽगस्त्यः, तेन=शक्रदत्तेन, अन्नपानविधिना=अन्नादिभोज्यपेयपदार्थजातेन, महर्षीन्=वनवासिनो मुनीन्, सन्तर्पयन् उदारतराम्=महतीम्, मुदमवाप=प्राप्तवान्। तापसजनोचितया=तपस्विजनयोग्यया वृत्त्या, ध्यानेन नियमेन च अभिरेमे=सदा प्रसन्नोऽतिष्ठत्। इन्द्रेण दीयमानमपि सर्वमन्नपानादिकं स मुनिभ्यः प्रदाय स्वयं तपस्विजनयोग्येनाहारेण अप्रमाणनियमेन अनन्तनिग्रहेण शमेन च प्रसादमनुभवन्नवर्त्ततेति तात्पर्यम्।

## मैत्रीबलजातकम्

( ६२ ) विनिग्रहप्रग्रहयोः प्रवृत्तिर्धर्मोपरोधं न चकार तस्य।
हिताशयत्वान्नयनैपुणाच्च परीक्षकस्येव पितुः प्रजासु ॥

प्रसङ्गप्रदर्शनपूर्वकं व्याख्यायताम्।

**उत्तरम्**—मैत्रीबलजातके मैत्रीबलस्य राज्ञो वर्णने पद्यमिदम्। तस्य=मैत्रीबलस्य राज्ञो, विनिग्रहो=दण्डः, प्रग्रहोऽनुग्रहश्च, तयोः प्रवृत्तिः=आचरणम्, धर्मोपरोधं=धर्मविघातं न चकार, धर्मानुरोधेनैव स प्रजा अदण्डयत्, ता अनुगृहीतवांश्चेत्यर्थः। तत्र कारणमाह—हिताशयत्वात्=हितकामुकत्वात्, नयनैपुणात्=नीतिनैपुण्याच्चेति प्रजानां हितमनुरुध्य नीतिमवलम्ब्य च स प्रजानां निग्रहानुग्रहयोः प्रावर्त्ततेति भावः। तत्र दृष्टान्तमाह—परीक्षकस्येति—यथा परीक्षकस्य=सर्वमपि कर्त्तव्यं प्रति सावधानस्य, पितुः प्रजासु प्रवृत्तिः निग्रहेऽनुग्रहे च हितकामनयैव नीत्यनुसारेणैव च भवति, तथैव तस्य राज्ञोऽपि प्रजासु

10840

निग्रहानुग्रहयोः प्रवृत्तिः प्रजाहितकामनया नीत्यापि च प्रवर्त्तिताऽजायतेति तात्पर्यम् ।

( ६३ ) तस्य प्रभावातिशयान्नृपस्य ममेति यत्रैव बभूव बुद्धिः ।
सैवास्य रक्षा परमास तस्मादोजांसि हर्त्तुं न विषेहिरे ते ॥

व्याख्येयमिदं पद्यं यथाप्रसङ्गम् ।

**उत्तरम्**—मैत्रीबलजातके तत्प्रभावातिशयवर्णने पद्यमिदम् ।

तस्य नृपस्य=राज्ञो मैत्रीबलस्य, प्रभावातिशयात्=प्रतापबाहुल्यात्, तत्र =यस्मिन् भूभागे, 'मम' इति बुद्धिः=मत्सम्बन्धी मदधिकारे देशोऽयमिति मतिः बभूव, सैव=तादृशी तदीया बुद्धिः एव, तस्य=देशस्य, रक्षा=पालन-साधनम्, आस=बभूव तत्सम्बन्धित्वमात्रज्ञानेन प्रयासान्तरनिरपेक्षेणैव देशाः सुरक्षिता आसन्नित्यहो तत्प्रभावातिशय इत्यर्थः । तस्मात्=प्रभावातिशय-वशादेव, रक्षायाः सम्पादनात्, ते=देशाः, ओजांसि=अन्तर्बलानि, हर्त्तुं न विषेहिरे, प्रभावमात्रसुरक्षिता देशा भयोत्पादनादिकृतानामन्तर्बलापहारिणां कुचेष्टानां विषया नाजायन्त । राजानोऽन्ये हि प्रजानां रक्षार्थं भयमुत्पाद्य तदोजोहरण-द्वारा ता दुर्बलीकृत्य प्रभावं दर्शयन्ति, अयं तु न तथा, ममायं देश इति घोषणा-मात्रेणैव देशे व्यवस्थाया अप्रतिहतत्वात्, ओजोहरणप्रक्रियाया अनपेक्षितत्वा-दिति परमार्थः ।

( ६४ ) कनकगिरिशिलाविशालवक्षाः शरदमलेन्दुमनोज्ञवक्त्रशोभः ।
कनकपरिघपीनलम्बबाहुर्बृषभनिभेक्षणविक्रमो नरेन्द्रः ॥

श्लोकस्यास्य स्फुटा व्याख्या विधीयताम् ।

**उत्तरम्**—मैत्रीबलजातके तत्प्रभावपालितासु प्रजासु गोपाला अरण्ये निर्भया विचेरुः, तेषां पुरतो यक्षाः समायाताः, ते प्रोचुः किमिति यूयं निर्भया विचरथ, तदुत्तरे तैरुक्तम्—वयं स्वस्त्ययनविशेषरक्षिताःस्म इति, यक्षैः कीदृशो भवतां स्वस्त्ययनविशेष इति पृष्टास्ते राजैवास्माकं स्वस्त्ययनविशेषः, कीदृशोऽसाविति पुनरनुयुज्यमाना गोपाला राजानमवर्णयन्, तत्रैव प्रक्रमे पद्यमिदम्—कनकेति—कनकगिरेः=सुवर्णपर्वतस्य, शिला इव विशालं विसारि=विस्तीर्णं, वक्षो यस्य तथा, शरदः=शरदृतोः, यः अमलः=निर्मलच्छाय, इन्दुः=चन्द्रमास्तस्येव वक्त्रशोभा=मुखकान्तिर्यस्य तादृशः, कनकस्य=सुवर्णस्य, यः परिघः=दण्ड-विशेषस्स इव, पीनः=स्थूलो, लम्बो=दीर्घश्च, बाहुः=भुजो यस्य तादृशः,

वृषभो—बलीवर्दस्य, इव ईक्षणं विक्रमश्च यस्य तादृशोऽस्माकं मैत्रीबलो नाम राजास्तीति ।

अत्र श्लोके प्रतिचरणमेकोपमा दत्ता, प्रथमे चरणे वक्षसः कनकगिरिशिलया विस्तृतत्वसाम्येन वक्षस उपमा, द्वितीये चरणे शरत्कालचन्द्रेण मनोज्ञतया मुखस्योपमा, तृतीये चरणे च बाह्वोः कनकपरिघेण सह पीनत्वलम्बत्वकृतोपमा, चरमे च चरणे राजेक्षणस्य तद्विक्रमस्य बलीवर्दनयनेन सह तद्विक्रमस्य बलीवर्दविक्रमेण सहोपमेति चतस्र उपमाः परस्परनिरपेक्षा अत्र प्रयुक्ता बोध्याः । सर्वाभिश्च ताभिर्मैत्रीबलस्य सुरूपत्वबलवत्त्वादीनि राजोचितानि वस्तूनि व्यज्यन्त इत्यलङ्कारेण वस्तुध्वनिः ।

( ६५ ) मैत्री तस्य बलं ध्वजाग्रशबलं त्वाचारमात्रं बलं
नासौ वेत्ति रुषं न चाह परुषं सम्यक् च गां रक्षति ।
धर्मस्तस्य नयो न नीतिनिकृतिः पूजार्थमर्थः सता-
मित्याश्चर्यमयोऽपि दुर्जनधनं गर्वं च नालम्बते ॥

कस्य प्रसङ्गे पद्यमिदमवतरति ? इत्यभिधाय व्याख्यायतां पद्यमिदम् ।

उत्तरम्—पूर्वोक्त एव प्रसङ्गोऽस्यापि श्लोकस्य ।

तस्य=मैत्रीबलस्य, मैत्री=सर्वभूतानुकम्पा, एव बलं=सामर्थ्यम्, ध्वजाग्रशबलं=ध्वजाग्रैर्युक्तं बलं, सैन्यं तु आचारमात्रम्=राजा सैन्यं रक्षेदिति परम्परापालनमात्रम् । स रुषं=कोपं कर्त्तुं, न वेत्ति=न जानाति, परुषं=कठोरं च, न आह=वक्ति, कोपमकृत्वा कठोरं वचनं चानुक्त्वैव च सम्यक्=साधु, गां=भुवं, रक्षति=पालयति । नयः=नीतिः, तस्य धर्मः=अनुपेक्षणीय आचारः, नीतिनिकृतिः=नीतित्यागो न धर्मः, सतां पूजार्थं तस्य अर्थो=धनम्, इति=एवम्, आश्चर्यमयः=आश्चर्यस्वरूपोऽपि, स दुर्जनधनम्=दुर्जनानां सम्पदं, गर्वं=स्मयं च, न आलम्बते=न आश्रयति ।

तस्य राज्ञो मैत्री एव, सैन्यबलं तु राजपरिपालनीयपरम्परामात्रनिर्वाहः, कोपं कर्त्तुमजानन् अपरुषवचनश्चासौ धरायाः साधुरक्षकः, नीतिरेव तस्य धर्मः, सतामादरायैव तस्य धनसञ्चयः, एवं लोकविलक्षणतया आश्चर्यमयो भूत्वा स दुर्जनसमधिगम्यं धनं न वा गर्वमपि वा धत्त इति भावः ॥

(६६) दंष्ट्राकरालवदनानि दीप्तपिङ्गलकेकररौद्रनयनानि स्फुटितचिपिटविरूपघोणानि ज्वलदनलकपिलकेशश्मश्रूणि सजलजलधरान्धकाराणि विकृतभीषणानि स्वान्येव वपूंषि प्रत्यपद्यन्त ।

प्रकरणप्रकाशनपूर्वकं व्याख्यायतामेष सन्दर्भः ।

उत्तरम्—वने वर्त्तमानैर्गोपालै राजगुणेषु वर्णितेषु यदा यक्षा आश्चर्यचकिता इवाजायन्त, तदा गोपालैरुक्तमेवंविधं राजानं साक्षात्कर्त्तुं भवन्तो नगरं गन्तुमर्हन्ति, इत्युक्तास्ते भोजनकाले राजानमुपजग्मुः । तेषामेव स्वरूपं वर्णयति कविरत्र गद्यांशे ।

राजसमीपगमनाय कृतमतयो यक्षाः सौम्यं वपुर्विहाय भीषणाकाराः समजायन्तेति तेषां वदनानि दंष्ट्राकरालानि=भीषणदंष्ट्रायुतानि, दीप्तं=ज्वलत्, पिङ्गलं=कडारवर्णम्, केकरं=कुञ्चिततारम्, अत एव रौद्रं=भीषणं च नयनं यत्र तादृशानि, वपूंषि यक्षाः प्रत्यपद्यन्तेति अग्रिमांशेन सम्बन्धः । एवमेवाग्रेऽपि विशेषवाक्यानामन्वयः । स्फुटिता=विविक्ता, चिपिटा च अत एव विरूपा=असुन्दरी, घोणा=नासिका, येषु तादृशानि । ज्वलन्=समिद्धः, अनलः=अग्निः इव, कपिलः=तद्वर्णः, केशः श्मश्रु च यत्र तथोक्तानि । सजलजलधरः=वारिपूर्णो मेघ इव, अन्धकाराणि=श्यामलानि, विकृतानि=विकृताकाराणि, अत एव भीषणानि=भयानकानि, स्वानि=निजानि, वपूंषि=शरीराणि, प्रत्यपद्यन्त=अधारयन् । यक्षाः स्वरूपाणि भीषणानि पूर्वोक्ताकाराणि धृत्वा भोजनकाले मैत्रीबलनामकस्य राज्ञः पुरत उपस्थिता जाता इत्यर्थः ।

(६७) एवंविधाहारपरायणानां कारुण्यशून्याशिवमानसानाम् ।
प्रत्याहमेषां दहतां स्वमर्थं दुःखानि यास्यन्ति कदा नु नाशम् ॥

प्रसङ्गनिर्देशपूर्वकं व्याख्यायताम् ।

उत्तरम्—भोजनसमये समुपस्थितेभ्यो भयानकाकारधरेभ्यो यक्षेभ्यो यथोपस्थितं भोजनमादाय सत्कर्त्तुमुपस्थितो मैत्रीबलस्तान्दृष्ट्वा दुःखितो ब्रवीति ।

एवंविधेति—एवंविधे=मांसशोणितरूपे, आहारे=भोजने, परायणानाम्=अभ्यस्तमानसानाम्, अतश्च कारुण्यशून्यानि=निर्दयानि, तत एव च अशिवानि=अमङ्गलानि, मानसानि=चित्तानि, येषां तादृशानाम्, एषां=यक्षाणाम् प्रत्याहम्=अनुदिनम्, स्वमर्थं=स्वं पुरुषार्थम्, मोक्षधर्मादिरूपम् दहतां=विनाशयताम्, दुःखानि=शाश्वतिकामङ्गलानि, कदा नु नाशं यास्यन्ति । इमे

मांसरुधिरादि भुञ्जाना निष्करुणाः प्रत्यहमघमर्जयन्तो यत्पापं सञ्चिन्वन्ति तस्य धर्मनाशकस्य पापस्य नाशः कदा नु भविष्यति ?

( ६८ ) यद्यत् प्रजानामहितोदयाय तत्तत् प्रियं मानद राक्षसानाम् ।
परोपरोधार्जितवृत्तितुष्टिरेवं स्वभावानघ जातिरेषाम् ॥

व्याख्यायताम् ।

उत्तरम्—यक्षेभ्यो निजं रुधिरं प्रदातुमुद्यताय तदर्थं च सिरामोक्षणाय वैद्यानाकर्त्तुमादिशन्तं मैत्रीबलं तदमात्याः कथयन्ति—यद्यदिति—हे मानद ! =सम्मानप्रदायिन्, यद्यत् कर्म प्रजानां=लोकानाम्, अहितोदयाय=अकल्याणकरणाय, राक्षसानाम्=अमीषां यक्षाणाम्, तत्तत् कर्म प्रियं=हितम् । यैः कर्मभिः प्रजानामहितं जायते, तत्तत् कर्मामी यक्षा रोचयन्ते इत्यर्थः । हे अनघ !=हे निष्कलुष !, परोपरोधेन=परपीडनेन, अर्जिता=उपपादिता, या वृत्तिर्जीविका, तया तुष्टिः=सन्तोषो, यस्याः एवं स्वभावा ईदृशी एषां= राक्षसानां जातिः । इमे परोत्पीडनेनैव तृप्तिं लभन्ते इत्यर्थः ।

(६९) असंस्तुतानामपि न क्षमेय पीडां कथं कैव कथा भवत्सु ।
स्वान्येव मांसानि यतोऽस्मि दित्सुर्मां चैव याचन्त इमे न युष्मान् ॥

वक्तृबोद्धव्यनिर्देशपूर्वकं व्याख्यायतामिदम् ।

उत्तरम्—मांसं रुधिरं च याचमानेषु यक्षेषु राजनि मैत्रीबले स्वं मांसं रुधिरं च प्रदातुं प्रवृत्ते मन्त्रिमुख्याः यदा स्वं स्वं शरीरं प्रदाय राजानं रक्षितुमचेष्टन्त, तदा राज्ञः कथनमिदं मन्त्रिणः प्रति ।

अहम् असंस्तुतानामपि=अपरिचितजनानामपि, पीडां=कायक्लेशं, न क्षमेय=सोढुं शक्नुयाम्, भवत्सु का कथा ? भवतां कायक्लेशं सोढुं शक्नुयामिति नितान्तमसम्भाव्यमिति भावः । यतः=यस्मात्, स्वानि=निजशरीरगतानि, एव मांसानि=पिशितानि, दित्सुः=दातुमुद्यतोऽस्मि । परपीडासहनसामर्थ्यरहितोऽहं मांसं दातुमिच्छामि, भवतां मांसं दद्यामिति न सम्भवति, यतो योऽहं परेषामपरिचितानामेषां पीडां सोढुमशक्तः सोऽहं निजामात्यानां पीडां कथं सहेव, किञ्चामी राक्षसा मदीयमेव मांसं याचन्ते न भवदीयमतो मया स्वमेव मांसं दातुमुचितं न भवदीयं, याचितप्रदानमेव उचितं नायाचितप्रदानं, तेन भवतामाग्रहो नोचितः, सम्प्रति सिरामोक्षणनिपुणान् वैद्यानाहूय भवन्तो मामुपकुर्वन्तु इत्याशयः । इमे हि राक्षसा मां याचन्ते, न युष्मान् याचन्ते, इति भवद्भिः स्वमांसं दातुमनाग्रहः करणीय इत्याशयः ।

( ७० ) स पीयमानक्षतजः क्षितीशः क्षपाचरैर्हेमवपुश्चकाशे ।
सन्ध्यानुरक्तैर्जलभारनम्रैः पयोधरैर्मेरुरिवोपगूढः ॥

स्फुटं व्याख्यायताम् ।

उत्तरम्—यक्षैर्मांसे याच्यमाने स्वमांसं दातुमुद्यतस्य राज्ञो मैत्रीबलस्य रुधिरं पिबत्सु यक्षेषु तदुपगूढवपुषः राज्ञो वर्णनमिदम् ।

क्षपाचरैः=राक्षसैः, पीयमानं=प्रसह्यास्वाद्यमानं, क्षतजं=रक्तं यस्य तादृशः, हेमवपुः=सुवर्णकान्तिशरीरः, क्षितीशो=राजा मैत्रीबलः, सन्ध्यानुरक्तैः=सायंकालिकरक्तभानुकररञ्जितैः, जलभारनम्रैः=जलपूर्णतया नमद्भिः, पयोधरैः उपगूढः=आश्लिष्टः, मेरुः=हेमाद्रिः इव, चकाशे=शुशुभे । अयमाशयः—मेरुः सुवर्णवर्णः तदुपरि सायंसूर्यप्रभया रक्तीकृताः स्वयं श्यामाश्च घनाः नम्राः, ते यथा शोभेरन्, तथैव श्यामभीमकायाः राज्ञो रक्तेन एकीकृताः हेमप्रभशरीरस्य राज्ञः उपरि आरूढाश्च ते यक्षाः प्रतीयन्ते स्मेति पूर्णोपमा । राजात्र हेमगिरिणा, यक्षाश्च जलपूर्णमेघभावेन वर्णिताः । तेषां स्वयं श्यामता, रुधिरप्लुतशरीरतया च रक्तत्वं तेन सायंकालिकरविकररञ्जितजलपूर्णघनश्यामत्वमुपपद्यत इति कवेः कल्पना ।

( ७१ ) स्थाने भक्तिवशेन गच्छति जनस्त्वत्कीर्त्तिवाचालतां
स्थाने श्रीः परिभूय पङ्कजवनं त्वत्संश्रयश्लाघिनी ।
व्यक्तं शक्रसनाथतामपि गता त्वद्वीर्यगुप्तामिमां
द्यौः पश्यत्युदितस्पृहा वसुमतीं नो चेदहो वञ्च्यते ॥

विशदं व्याख्यायतां पद्यमिदम् ।

उत्तरम्—राजनि मैत्रीबले यक्षेभ्यः स्वं मांसं प्रदातुं तत्परे तद्दानप्रवृत्त्या विस्मितानां यक्षाणां तस्य स्तुतावुक्तिरियम् । स्थाने इति—जनः भक्तिवशेन=श्रद्धया, त्वत्कीर्तिवाचालतां=त्वत्स्तुतिपरायणतां, गच्छति=तत्स्थाने युक्तम् । श्रीः=लक्ष्मीः, पङ्कजवनं=कमलकाननं, परिभूय=अनादृत्य, त्वत्संश्रयश्लाघिनी=त्वदाश्रयपरा स्थाने, कमलवनं विहाय लक्ष्मीर्यत्त्वदाश्रये स्थातुं कृतमतिस्तत्तदाचरणमपि युक्तम् । व्यक्तं=स्फुटम्, शक्रसनाथतां गतापि द्यौः=इन्द्रपालितोऽपि स्वर्गलोकः, उदितस्पृहा=जायमानश्रद्धा सती, यद् वसुमतीं=धराम्, पश्यति=आलोकते, तत् त्रितयमपि युक्तमेव । सम्प्रति महासत्त्वस्य दानप्रवृत्तेस्तव श्रद्धया जनो यत्कीर्त्ति गायति, लक्ष्मीश्च कमलवनमनादृत्य त्वामाश्रयते, स्वर्गलोकश्च शक्रपालितः सन्नपि सादृश्यलाभे स्पृहयेव धरणीं वीक्षते, तत्त्रित-

यद्यपि युक्तमेव, नो चेत्=यद्येदं न भवति, अर्थात् लोकः श्रद्धया त्वत्कीर्तिं न गायति, लक्ष्मीश्च कमलवनं विहाय त्वां नाश्रयते, स्वर्गोऽपि च स्पृहयेव धरित्रीं न पश्यति, तदा त्रितयमपि तत् लोकलक्ष्मी स्वर्गरूपं वञ्चयते=वञ्चितत्वेन गण्यते, अवसरमवाप्य तदनुकूलाचरणवैमुख्यं तेषां वञ्चन एव पर्यवस्यति, न चेदमुपपद्यत इति भावः ।

(७२) तदभ्रवद् व्योमनि मारुतेरितं पतत्त्रिसेनेव वितानवत् क्वचित् ।
विसृत्य मालाग्रथितेव कुत्रचित् समं समन्तान्नृपतेर्व्यकीर्यत ॥

—सप्रकरणनिर्देशं व्याख्यायताम् ।

उत्तरम्—यक्षैर्मांसं रुधिरं च याच्यमानो मैत्रीबलो नाम राजा यदा तथा दातुं सज्जो जातः, अमात्यैर्वार्यमाणोऽपि दानप्रवृत्तेर्न व्यरमत्, तदा ते यक्षा राक्षसरूपं विहाय दिव्यं रूपञ्चास्थाय तं तुष्टुवुः, आकाशदेशाच्च देवविसृष्टानि पुष्पाणि तदुपरि निपेतुरिति वर्णनपरं पद्यमिदम्—तदभ्रवदिति—तत्=पुष्पम्, अभ्रवत्=मेघवत्, व्योमनि=आकाशे, मारुतेरितं=वायुचालितं सत्, वितानवत्=विस्तार्यमाणं, पतत्त्रिसेना=पक्षिसमूह इव क्वचित्, ग्रथिता=गुम्फिता, माला इव च कुत्रचित्, समं=तुल्यकालम्, नृपतेः समन्तात्=नृपं परितः, व्यकीर्यत=विस्तीर्णम् ।

देवै राजाभिनन्दनार्थं क्षिप्यमाणं तत्पुष्पम् आकाशे वायुप्रेरितघनवत् वितानशालिपक्षिदलवत्, ग्रथितमालावच्च राजानं परितो व्यकीर्यतेति भावः । देवक्षिप्तपुष्पाणां तिस्रोऽत्रोपमानि, एकम्—मारुतप्रेरितो मेघ इति, द्वितीयं—पतन्ती पक्षिततिरिति, तृतीयं च—ग्रथिता मालेति मालोपमात्रालङ्कारः—

'मालोपमा यदेकस्योपमानं बहु दृश्यते' इति तल्लक्षणात् ॥

(७३) 'तदेवं क्षतरोहणसमर्थैर्दिव्यैर्मानुष्यकैरोषधिविशेषैर्निर्वेदनं यथापौराणं शरीरं कृत्वा दाक्षिण्यविनयोपचारमधुरं प्रतिपूजितस्तेन राज्ञा स्वमावासं प्रतिजगाम' ।

सप्रसङ्गं व्याख्यायताम् ।

उत्तरम्—स्वं मांसं दत्त्वाऽतिथीन् यक्षान् पूजयितुमुद्यतस्य मैत्रीबलस्य सम्माननार्थमिन्द्रः स्वयमुपस्थितः । तत्रैव प्रकरणे गद्यमिदम् ।

तत्=ततः, एवं=वर्णितक्रमेण, क्षतरोहणसमर्थैः=व्रणपूरणदक्षैः, दिव्यैः=सद्यः फलदतयाऽलौकिकैः, मानुष्यकैः=मनुष्यलोकलभ्यैः, ओषधिविशेषैः=तैस्तैरोषधैः, निर्वेदनं=गतव्यथं, यथापौराणं=प्राक्तनमिव, शरीरं कृत्वा तेन

मैत्रीबलेन दाक्षिण्यस्य=चातुर्यस्य, विनयस्य=नम्रतायाश्च, य उपचार:=व्यवहारस्तेन मधुरं यथास्यात्तथा, तेन राज्ञा=मैत्रीबलेन, प्रतिपूजितः=सत्कृतः, शक्रो निजावासं प्रतिजगाम=प्रतिनिवृत्तः। इन्द्रो मैत्रीबलव्यवहारेण प्रसन्नः स्वयमागत्य तं क्षतरोहणसमर्थैरुपचारैः निर्वेदनदेहं पूर्ववत् स्वस्थं विधाय तेन विनयपूर्वकं कृतां सपर्यां प्रतिगृह्य च यथागतं ययावित्याशयः।

( ७४ ) 'बहुकराः खल्वेते पञ्चका भिक्षवः'।

विव्रियताम् इयं पङ्क्तिः।

**उत्तरम्**—मैत्रीबलस्य परीक्षार्थं पञ्चभिक्षुरूपधरा यक्षाः समागताः, ते च मांसमयाचन्त, तदपि जीवितां प्राणिनाम्, तस्यां स्थितौ मैत्रीबलः स्वमेव देहं समर्पितवान्। एतावता प्रसन्नास्ते। शक्रस्तु तदीयं व्यवहारमालोक्य प्रसन्नः सद्य एव तैरुपचारविशेषैस्तं निर्वेदनं कृतवान्, सेयं कथा।

यदि भिक्षवस्तथा नाचरिष्यस्तदा इन्द्रः स्वयमागत्य तं न तथा सममानयिष्यदतो भिक्षव एते बहूपकृतवन्तः। सामान्यभिक्षुगणापेक्षया भिक्षव इमे बहूपकृतवन्तः, इत्येवाभिसन्धाय—उक्तम्—'बहुकरा खल्वेते इमे पञ्च भिक्षवः'—साधारणभिक्षुभ्योऽमी विशिष्टा इत्यर्थः।

## विश्वन्तरजातकम्

(७५) (क) युवापि वृद्धोपशमाभिरामस्तेजस्व्यपि क्षान्तिसुखस्वभावः।
विद्वानपि ज्ञानमदानभिज्ञः श्रिया समृद्धोऽप्यवलेपशून्यः॥

(ख) 'अमृष्यमाणः स जगद्गतानां दुःखोदयानां प्रसृतावलेपम्।
दानेषु वर्षी करुणोरुचापस्तैर्युद्धसंरम्भमिवाजगाम॥

यथाप्रसङ्गमनयोः श्लोकयोर्व्याख्या कार्या।

**उत्तरम्**—( क ) शिवीनां राज्ञः सञ्जयस्य वर्णने पद्यमिदम्—

युवापि=यौवनावस्थायां विद्यमानोऽपि, वृद्धस्य उपशमः=शान्तिस्तेनाभिरामो=रमणीयः, तेजस्वी=तेजोयुक्तः सन्नपि, क्षान्त्या=तितिक्षया, सुखं यस्य सः क्षान्तिसुखः, तादृशः स्वभावः=प्रकृतिर्यस्य तथोक्तः, तेजस्वी सन्नपि=शान्तस्वभाव इति भावः। विद्वान्=विद्याशाली सन्नपि, ज्ञानमदस्य=ज्ञानकृतगर्वस्य, अनभिज्ञः=गर्वशून्यः, श्रिया समृद्धोऽपि=सम्पत्तिमानपि, अवलेपशून्यः=धनदर्परहितः, आसीदिति शेषः।

विरोधाभासोऽत्रालङ्कारः। युवा वृद्धोचितक्षमया युज्यते, तेजस्वी क्षान्त्या भूष्यते, विद्वान् ज्ञानमदेन हीयते, धनी धनगर्वरहितो भवतीति विरुद्धं तदत्र दृश्यमानं विरोधं प्रकटयति।

( ख ) स=संजयो नाम राजा, जगद्गतानां=संसारे प्रसृतानाम्, दुःखोदयानां=क्लेशसम्भवानाम्, प्रसृतावलेपम्=प्रसृतं गर्वम्, अमृष्यमाणः=सोढुमशक्नुवन्, दानमेव इषुः तद्वर्षी=दानरूपबाणवर्षाकरः, करुणा=दया एव, ऊरुः=विशालः, चापो यस्य तादृशः, तैः=जगतो दुःखैः, युद्धसंरम्भम्=संग्राममिव, आजगाम=प्राप। संसारसम्भावनो दुःखोदयान् सोढुमपारयन्संजयो नाम राजा चापं विधाय दयां, तेन दानबाणान् वर्षन् तैः सह युद्धमिव कर्त्तुं प्रववृते। कस्यापि परस्य पराभवाय राजा युद्धमिव करोति, तथैवायमपि दुःखैः सह युद्धमिव चकार, यत्रास्य दया चापतां दानं च बाणतामवहदिति रूपकम्।

( ७६ ) पर्वदिवसेषु पोषधनियमप्रशमविभूषणः शिरःस्नातः शुक्लक्षौमवासा हिमगिरिशिखरसन्निकाशं मदलेखाभ्यलंकृतमुखं लक्षणविनयजवसत्त्वसम्पन्नं गन्धहस्तिनं समाज्ञातमौपवाह्यं द्विरदवरमभिरुह्य समन्ततो नगरस्याभिनिविष्टान्यर्थिजननिपानभूतानि स्वानि सत्रागाराणि प्रत्यवेक्षते स्म।

व्याख्या क्रियतां सप्रकरणनिर्देशम्।

उत्तरम्—सञ्जयनाम्नः शिवीनां राज्ञो वर्णनमत्र प्रसङ्गः।

पर्वदिवसेषु=पूर्णिमादिपर्वसु, पोषधः=उपवासः, नियमः=संयमो मैथुनादिनिवृत्तिः, प्रशमः=शान्तिग्रहणं च, तानि भूषणानि यस्य तथोक्तः, शिरःस्नातः=कृतपूर्णस्नानः, शुक्लं=धवलं, क्षौमं वासः=पट्टवस्त्रं यस्य तादृशः, हिमगिरिः=पर्वतराजः, तच्छिखरं=प्रस्थं, तत्सन्निकाशं=हिमालयवदुन्नतं धवलं च, मदलेखा=दानवारिरेखा, तया अभ्यलङ्कृतं मुखं=शोभितमाननं यस्य तं तथोक्तम्, लक्षणेन=शुभचिह्नेन, विनयेन=नम्रतया, सत्त्वेन=बलेन, जवेन=वेगेन च, सम्पन्नं=युक्तम्, गन्धहस्तिनं=गन्धगजं ( 'यस्य गन्धं समाघ्राय न तिष्ठन्ति परे द्विपाः' इति लक्षितम् ), समाज्ञातम्=प्रख्यातम्, औपवाह्यम्=वाहनोपयुक्तम्, अभिरुह्य=आरुह्य, नगरस्य समन्ततः=पुरीं परितः, अभिनिविष्टानि=स्थापितानि, अर्थिजनानाम्=याचकानां कृते, निपानभूतानि=जलाशयतुल्यानि ( सतृषमुपसर्पणीयानि ), स्वानि=निजानि, सत्रागाराणि=दानभवनानि, प्रत्यवेक्षतेस्म। सञ्जयो नाम राजा सो पर्वसु स्नातः शुक्लाम्बर-

धर: कृतसंयमश्च सुलक्षणं गविनं बलिनं च गन्धद्विपमारुह्य ग्रामे समन्ततोऽवस्थितानि याचकै: सरभसमुपसर्पणीयानि स्वानि दानभवनानि निरीक्षतेस्मेति भाव: ।

( ७७ ) अमुष्य तव नागस्य गतिलीलाविलम्बिन: ।
गुणैरर्थित्वमायाता दानशौर्याच्च ते वयम् ।।

प्रकरणनिर्देशमुखेन व्याख्या कार्या ।

उत्तरम्—शिवीनां राज्ञ: सञ्जयस्य दातृता प्रसिद्धाऽऽसीत्, तत्प्रत्यासन्ना राजानस्तमीर्ष्ययेव पश्यन्तिस्म । तेऽचिन्तयन् यद्यस्य गज: केनापि प्रकारेणापह्रियते तदाऽस्य शक्ति: क्षीयते, तथा चिन्तयन्तस्ते ब्राह्मणान्प्रेषितवन्तो गजं याचितुं, ते चागत्य संजयमुक्तवन्त: पद्यमिदम् ।

गतिलीलाविलम्बिन:=मन्दगतिकस्य सलीलगमनस्य, चामुष्य तव नागस्य =करिण:, गुणै:=गजगतैस्तैस्तै: गुणै:, ते दानशौर्यात्=तव दानप्रवृत्तिकत्वाच्च, वयं=ब्राह्मणा, अर्थित्वम् आयाता:=याचकतां गता: । यतोऽयं गजस्तवातीव गत्यादिगुणप्रसिद्धस्त्वं च दानितया प्रख्यातोऽतो वयं त्वां गजं याचितुमागता इति तात्पर्यम् ।

( ७८ ) तत: स विद्वानपि राजशास्त्रमर्थानुवृत्त्या गतधर्ममार्गम् ।
धर्मानुरागेण ददौ गजेन्द्रं नीतिव्यलीकेन न संचकम्पे ।।

सप्रसङ्गं व्याख्यायताम् ।

उत्तरम्—स:=शिविराजसञ्जयपुत्रो विश्वन्तरो नाम, अर्थानुवृत्त्या=अर्थप्रधानतया, गतधर्ममार्गम्=धर्ममार्गविरोधि ( अर्थप्रधानतया राजनीति: सर्वत्र धर्मपथं नानुसरति ), राजशास्त्रं=राजनीतिमार्गम्, विद्वान्=जानन्नपि ( विदे: शतरि विद्वानिति पदम् ), धर्मानुरागेण=धर्मप्रेम्णा, गजेन्द्रं=स्ववाहनभूतं करिणं, ददौ=याचकब्राह्मणेभ्यो दत्तवान्, नीतिव्यलीकेन=राजनीतिव्युत्क्रमेण च, न संचकम्पे=न चलचित्तोऽभवत् । धर्मराजनीत्यो: परस्परविरोधे समुपस्थिते धर्ममनुसरता राजसुतेन नीतिपरित्यागकृत: कम्पो नावापि, धर्मस्थिरमानसत्वद्योतनायेत्थमुक्ति: ।

सञ्जयस्य गन्धद्विपे वर्त्तमाने अजेयत्वमिति विदन्त: प्रत्यासन्ना राजानो ब्राह्मणान् गजं याचितुं प्रेषितास्ते तमयाचन्त गजम्, राजपुत्रो यद्यपि दानमीदृशं धर्मानुसारि सदपि नीत्या न युज्यते इति जानातिस्म, परन्तु धर्ममास्थाय स गजं

दत्तवान्, राजनीतेर्विरुद्धमाचरतोऽपि तस्य मनसि कोऽपि कम्पो नाजायत, धर्मनिष्ठत्वादिति भावः ।

(७९) निषेव्य मत्तभ्रमरोपगीतं यस्याननं दानसुगन्धिवायुः ।
महावलेपं परवारणानामायासदुःखेन विना प्रमार्ष्टि ॥

यथाप्रसङ्गं व्याख्या कार्या ।

उत्तरम्—सञ्जयराजकुमारेण विश्वन्तरेण दत्ते गन्धगजे व्यथमानानां प्रजानां राजानं प्रतीयमुक्तिः । निषेव्येति—दानसुगन्धि=दानवारिवासितं, मत्तभ्रमरोपगीतं=माद्यदलिगुञ्जितं, यस्य आननं=मुखं, निषेव्य=स्पृष्ट्वा, वायुः परवारणानां=शत्रुकरिणाम्, मदावलेपं=मदकृतं गर्वम्, आयासदुःखेन विना=अनायासं, प्रमार्ष्टि=अपनयति । सोऽयं जगद्विख्यातो गजो यस्य दानवारिणा सुरभिमुखं स्पृशन् वायुः स्वसम्पर्कमात्रेण शत्रुकरिणां मदावलेपमनायासमेवापनयति, त्वत्पुत्रेण ब्राह्मणेभ्यो दत्त इति नोचितं जातमिति लोकानां राजानम्प्रति निवेदनमत्र श्लोके । गन्धद्विपस्य गन्धो यदा वायुना नीयमानो रिपुगजा जिघ्रन्ति, तदा ते तद्भयेन पलायन्ते, इति प्रवादमनुसृत्येत्थमुक्तम् ।

(८०) किमत्र वा बह्वभिधाय निश्चयस्त्वयं शिबीनां त्वदभूत्यमर्षिणाम्।
प्रयातु वङ्कं तपसोऽभिवृद्धये नृपात्मजः सिद्धनिषेवितं गिरिम् ॥

यथाप्रसङ्गं व्याख्या कार्या ।

उत्तरम्—शिबिराजकुमारो विश्वन्तरो ब्राह्मणाय गन्धगजं दत्तवान् । तेन तत्कर्मणा क्षुब्धा व्यथिताश्च लोका राजानं कथितवन्तो महाराज ! नेदं युक्तं कर्म राजकुमारस्येति, राज्ञा किमत्र क्रियतामित्युच्यमाने कुपिताः शिवयोऽवोचन्त पद्यमिदम् ।

किमत्रेति—अत्र=अस्मिन् प्रसङ्गे, बहु=अधिकम्, अभिधाय=उक्त्वा किम्, नाधिकभाषणस्य किमपि फलं दृश्यत इत्यर्थः । कर्त्तव्यमाह–त्वदभूतीति—त्वदभूतेः=तव विपत्तेः, अमर्षिणाम्=असहनशीलानाम्, शिबीनां तु अयं निश्चयः=निर्णयः । सम्प्रति राजकुमारेण गजे दत्ते किं क्रियतामिति विषये बहुभाषणं वृथा, शिबीनामयमत्र निश्चयो यदयं कुमारो नृपात्मजः तपसोऽभिवृद्धये=तपस्यायै वनं प्रयातु, सिद्धनिषेवितं=सिद्धगणैरुपसेवितं, वंकं नाम वनं गच्छतु । अयमेवास्यानर्थस्य दण्डो यदयं नृपपुत्रस्तपश्चरितु सिद्धगणसेवितं वङ्कं नाम वनं गच्छतु, नास्य राजकर्मणि प्रवेशो जायतामिति तात्पर्यम् ।

(८१) निर्दुर्जनान्यनुपभुक्तसरित्तरूणि
नानाविहङ्गविरुतानि मृगाकुलानि।
वैदूर्यकुड्मलमनोहरशाद्वलानि
क्रीडावनाधिकसुखानि तपोवनानि ॥

प्रसङ्गप्रदर्शनपुरस्सरमस्य व्याख्या क्रियताम्।

उत्तरम्—शिवीनामनुरोधेन राज्ञा सञ्जयेन वनं गन्तुमाज्ञप्तो विश्वन्तरो राजकुमारो यो गन्धगजं ब्राह्मणाय दत्तवान्। तस्यामेव स्थितौ तस्य भार्या मद्री नाम तमनुगन्तुमैच्छत्। तस्या द्वौ पुत्रौ तया सहास्ताम्। वार्यमाणा गृहे स्थित्वा दानकर्मणि व्यापृता तिष्ठेरित्युच्यमानापि पत्या सा तमनुगन्तुमेव तत्पराऽभवत्, वने कष्टं स्यादिति खण्डयन्ती सा पतिमाह पद्यमेतत्—निर्दुर्जनानीति—निर्दुर्जनानि=दुर्जनरहितानि, अनुपयुक्ता=लोकैरव्यवहृताः सरितो=नद्यः, तरवो=वृक्षाश्च यत्र तादृशानि, नानाविहङ्गानां=विविधपक्षिणां, विरुतं=कूजितं, येषु तानि तथोक्तानि, मृगाकुलानि=हरिणयुतानि, वैदूर्यकुड्मलवत्=नीलमणिप्ररोहवत् मनोहरः=हृदयग्राही, शाद्वलः=ग्रासो, यत्र तथोक्तानि, क्रीडावनाधिकसुखानि=क्रीडोद्यानापेक्षयाऽधिकसुखप्रदानि, तपोवनानि भवन्तीति शेषः। दुर्जनराहित्येन लोकवैरल्यकृत दूषणराहित्यशालि सरित्तरुसाहित्येन पक्षिकूजितमनोहारित्वेन मृगाध्यासितत्वप्रतीतहिंस्रशून्यत्वेन हरितशाद्वलशालितया नेत्रसुखदत्वेन च तपोवनानां गृहारामाधिक्यं प्रतिपाद्यते।

(८२) व्यतीत्य चाविक्लममतिरुद्यानवनरुचिरमालिनं पुरवरोपचारमनुपूर्वेण प्रविरलच्छायाद्रुमं विच्छिद्यमानजनसम्पातं प्रविचरितमृगगणसम्बाधदिगालीढं चीरीविरावोन्नादितमरण्यं प्रत्यपद्यत।

प्रसङ्गप्रदर्शनेन व्याख्यायताम्।

उत्तरम्—अविक्लमा=निर्बाधा विभ्रमरहिता, मतिः=बुद्धिर्यस्य स तथोक्तः, विश्वन्तरो नाम राजपुत्रः उद्यानस्य=पुष्पवाटिकायाः, रुचिरा=मनोज्ञा, माला=समुदायो यत्र तादृशं, पुरवरोपचारं=नगरपरिसरं, व्यतीत्य=अतिक्रम्य, अनुपूर्वेण=क्रमेण, प्रविरलच्छायाद्रुमं=छायाद्रुमवैरल्ययुतं, विच्छिद्यमानजनसम्पातं=हीनमानलोकप्रचारं जनसम्पर्कशून्यम्, प्रविचरितानां=यत्र तत्र सञ्चारिणां, मृगगणानां=हरिणानां, संबाधः=समुपस्थितिः, यत्र तथाभूताभिः दिग्भिः=दिशाभिः, आलीढं=व्याप्तं, चीरीणां=झिंगुरपक्षिणां, विरावेण=शब्देन, उन्नादितं=शब्दायमानम्, अरण्यं=वनं, प्रत्यपद्यत=गतः।

अयमाशयः—याचकाय गन्धगजं कुमारो ददौ, स चायमतिशयिता तदीया दुर्नीतिः, एतया राज्यस्य क्षतिरिति प्रकृत्या साक्रोशमनुरुध्यमानो राजासंजयः दण्डरूपेण स्वपुत्रं कृतापराधं वनं गमयामास, स गन्तुकामो विपुनं स्वस्त्रियानुगम्यमानः क्रमशो हीनजनसञ्चारं मृगगणाध्यासितं चीरीविरावनादितमरण्यं गत इति।

( ८३ ) ( क ) निमन्त्रयामासुरिव द्रुमास्तं
हृद्यैः फलैरानमिताग्रशाखाः।
पुण्यानुभावादभिवीक्षमाणाः
शिष्या विनीता इव च प्रणेमुः॥

( ख ) वितानशोभां दधिरे पयोदाः
सुखः सुगन्धिः प्रववौ नभस्वान्।
परिश्रमक्लेशममृष्यमाणा
यक्षाश्च संचिक्षिपुरस्य मार्गम्॥

यथाप्रसङ्गं व्याख्यायताम्।

उत्तरम्—( क ) राजकुमारस्य विश्वन्तरस्य वनं गतस्य वने स्वागतं वर्णयति—निमन्त्रयामासुरिति—हृद्यैः=मनोहरैः, फलैः आनमिताः=नताः, अग्रशाखाः शाखाग्रभागा, येषां तादृशाः द्रुमाः निमन्त्रयामासुः=निमन्त्रणविधया सदकार्षुः। पुण्यानुभावात्=सत्कर्मप्रभावात्, अभिवीक्षमाणाः=पश्यन्तः (द्रुमाः), विनीताः=सुशिक्षिताः शिष्या इव, तं=विश्वन्तरं, प्रणेमुश्च=नमस्कृतवन्तश्च।

वनं गतं विश्वन्तरं नाम राजकुमारं फलभारनतशाखा द्रुमा निमन्त्रयामासुः, किञ्च नतास्ते प्रणताः शिष्या इव ते प्रणेमुरिति तत्र वने तदीयं स्वागतमजायत।

( ख ) वनं गच्छति विश्वन्तरे नाम राजपुत्रे धर्मवशात् समुपचितां तत्सुविधामाह—

अस्य=विश्वन्तरस्य, पयोदाः=मेघाः, वितानशोभां दधिरे, वितानभावं प्रपद्य तदातपक्लेशमपाहरन् घना इति भावः। सुखः=सुखकरः, सुगन्धिः=सुगन्धयुतः, नभस्वान्=वायुः, प्रववौ=वातिस्म, मार्गश्रमापनोदाय सुगन्धिवायुस्तं पर्यचरदिति। परिश्रमक्लेशम्=परिश्रमकष्टम्, अमृष्यमाणाः=सोढु-

मक्षममाणाश्च, यक्षाः=देवयोनिविशेषाः, मार्गम्=अध्वानं, संचिक्षिपुः=समक्षेपयन्।

मेघकृतेन वितानेनातपनिवृत्तिः, वायुसुगन्धेन मनोविनोदः मार्गसंक्षेपणेन यक्षकृतेन सुगमता चेति संहृत्य सर्वं सौविध्यमुपनतं बोध्यम्।

(८४) समाजवद्यच्च विभाति मे पुरा
सुतप्रलापप्रतिनादितं वनम्।
अदर्शनादद्य तयोस्तदेव मे
प्रयाति कान्तारमिवाशरण्यताम्॥

प्रसङ्गप्रदर्शनपूर्वकं व्याख्यायताम्।

उत्तरम्—वने वसतः विश्वन्तरस्य सस्त्रीपुत्रस्य कदाचिद् धर्मपरीक्षार्थमुपस्थितो ब्राह्मणस्तत्तनयावयाचत, दातृत्ववशाच्च स तौ तस्मै ददौ, तस्मिन् समये तदीया स्त्री फलाहरणाय वनं गताऽऽसीद्यदा चागत्य सा सुतौ नापश्यत्तदा तस्या उक्तिरियम्—समाजेति—सुतप्रलापैः=पुत्रव्याहारैः, प्रतिनादितं=मुखरितं, यद् वनं मे=मह्यं, समाजवत्=गृहवत् ग्रामवत् वा, प्रतिभाति=प्रत्यभासत, तदेव वनम् अद्य=सम्प्रति, तयोः=पुत्रयोः, अदर्शनात्=अवीक्षणात्, कान्तारं=भीषणं वनमिव, अशरण्यताम्=अरक्षाकृतकष्टयुतत्वेन भीषणतां प्रयाति। सुतसन्निधाने गृहवत्प्रतीतमिदं वनं सम्प्रति तददर्शने भयानकताकृतं दुर्गमत्वं प्रतियातीति तात्पर्यम्।

(८५) मां पश्य मद्रि मा पुत्रौ परिदेवीश्च देवि मा।
पुत्रशोकसशल्ये मे प्रहार्षीरिव मा हृदि॥

वक्तृबोद्धव्यनिर्देशपूर्वकं व्याख्यायताम्।

उत्तरम्—वनं गतो निजदातृतापराधे विश्वन्तरः प्रकृतिप्रेरणया पित्राऽऽदिश्यमानो निजपत्नीपुत्रैः सह। तत्रैकदा भार्यायां फलमूलान्याहर्तुं विपिनोदरं गतायां ब्राह्मणो विश्वन्तरं तद्बालकावयाचत, दातृतापरवशश्च स तौ तस्मायदात्। गृहागता च सा तनयावनवलोक्य भृशमव्यथत व्यलपच्च, अत्रैव स्थितो विश्वन्तरस्तामाह—मामिति—मद्रि, मां पश्य, पुत्रौ मा पश्य, सम्प्रति दत्तयोः पुत्रयोः शुचा विपद्यमानं मां पश्य, यथाहमपि न म्रियेय, पुत्रौ तु गतावेव, हे देवि! मा परिदेवीः, वृथा परिदेवनेन, विलापेन किमपि साध्यं नास्तीत्यर्थः। विलासस्य वैयर्थ्यमेवोपपादयति—पुत्रेति—पुत्रशोकसशल्ये=पुत्रशोकरूपशल्यसहिते, मे

हृदि मा प्रहार्षीः=प्रहारं मा कार्षीः। पुत्रशोकव्यथिते मम हृदि त्वदीयेन परिदेवनेन समधिकायते व्यथा, अतस्तथा न कुर्या इति भावः।

## यज्ञजातकम्

(८६) य एव लोकेषु शरण्यसम्मता-
स्त एव हिंसामपि धर्मतो गताः।
निवर्त्तते कष्टमपायसङ्कटे
जनस्तदादेशितकापथानुगः॥

यथाप्रसङ्गं व्याख्यायताम्।

उत्तरम्—यज्ञजातके अनावृष्टिकदर्थिते लोके यष्टव्यमिति प्रार्थयमानस्व-जनान् प्रतारयिष्यतो बोधिसत्त्वस्य मनोगता उक्तिरियम्।

य एव लोकेषु=जनतासु, शरण्याः=शरणत्वं गताः, रक्षका, सम्मताः=सम्मानभाजश्च, त एव लोकसम्मता धर्मतो हिंसामपि गताः धर्म इति बोधमाना हिंसामपि कुर्वते। तदादेशितं हिंसां धर्मत्वेन जानद्भिरुपदिश्यमानम्, कापथम्=कुमार्गम्, अनुगच्छन् जनः अपायसङ्कटे=विनाशरूपे विपत्तिस्वरूपे संकटे, निवर्त्तते=आगच्छति। कष्टम्=अतीव दुःखमिति।

ये लोकानां रक्षकाः सम्मानभाजश्च, त एव हिंसां धर्ममाचक्षाणा लोकान् हिंसायै प्रवर्त्तयन्ति, तत्प्रवर्त्तितश्च लोको दुर्मार्गं हिंसारूपमनुसरन् विपदि पततीति महत्कष्टमेतदिति भावः।

(८७) अतुल्यगन्धर्धिरसौजसं शुभां
सुधां किलोत्सृज्य वराप्सरोधृताम्।
मुदं प्रयास्यन्ति वपादिकारणाद्
वधेन शोच्यस्य पशोर्दिवौकसः॥

यथाप्रसङ्गं व्याख्या क्रियताम्।

उत्तरम्—अवृष्टिजन्यं क्लेशं दूरीकर्त्तुं लोकैरनुरुध्यमानो बोधिसत्त्वो यज्ञस्य पशुहिंसासहितत्वेन त्याज्यतां भावयन् मनसा चिन्तयति—अतुल्येति।

अतुल्यानि=अनुपमानि, इतरद्रव्यासाधारणानि, गन्धर्धिः=सुगन्धसमृद्धिः, रसाः=माधुर्यादयः, ओजः=सात्त्विकं बलं च, तानि यस्यां तादृशीमत एव शुभां=कल्याणकरीं, वराप्सरोधृताम्—वराभिः=असामान्यसुन्दरीभिः, अप्स-

रोभिः धृतां=धार्यमाणां, सुधाममृतं, किल उत्सृज्य=विहाय, शोच्यस्य=शोचनीयस्य, असमयमृत्युना शोच्यतां गतस्य, पशोः=यज्ञपशोः, वधेन=हिंसया, वपादिकारणात्—वपा=अन्तर्मज्जा, तदादेः रुधिरवपादिघृणितवस्तुजातात्, दिवौकसो=देवाः, मुदं प्रयास्यन्ति=नैतत्सम्भवति ।

येषां देवानां पुरतो निरुपमगन्धरसाढ्यां सुधामुपहर्त्तुं वराप्सरो वर्त्तन्ते, त एव देवा यज्ञे हिंस्यमानस्य पशोर्वपादिगन्धवदवयवलाभेन हर्षमनुभविष्यन्तीति न तर्कपथमवतरति तदलमेतदनुरुध्यमानयागप्रवृत्त्येति तात्पर्यम् ।

( ८८ ) 'तद्यं यमतः प्रभृति वो द्रक्ष्यामि व्यवधूतप्रमादनिद्रेण चारचक्षुषा शीलमर्यादातिवर्त्तिनमस्मदाज्ञां परिभवन्तं तं तं स्वकुलपांसनं देशकण्टकमहं यज्ञपशुनिमित्तमादास्य इत्येतद्वो विदितमस्त्विति ।'

कुत्र प्रसङ्गे कस्य चोक्तिरियमिति निर्दिश्य व्याख्यां कुरुत ।

उत्तरम्—यज्ञजातके वृष्टये यष्टव्यमिति प्रजयाऽनुरुध्यमानो मनसा तथाकर्त्तुमनीहमानश्च बोधिसत्त्वः समादिशति—तद्यमित्यादि ।

अतः प्रभृति=एतत्कालात् परतो, यं यं वः=युष्माकं मध्ये, व्यवधूता=अपगता, प्रमादनिद्रा=असावधानता, यस्य तादृशेन, सदा सतर्केणेत्यर्थः । चारचक्षुषा=प्रणिधिरूपेण नयनेन, शीलं=सत्स्वभावः, मर्यादा=लोकस्थितिश्च, तयोरतिवर्त्तिनं=लङ्घने प्रवृत्तं, दुःशीलं भिन्नमर्यादां च, अस्मदाज्ञां=राजादेशं, परिभवन्तं=न आद्रियमाणं, द्रक्ष्यामि=अवलोकिष्ये, तं तं स्वकुलपांसनं=निजं कुलं दूषयन्तं, देशकण्टकम्=देशद्रोहिणं, यज्ञपशुनिमित्तम्=यज्ञीयपशुत्वेन, आदास्ये=ग्रहीष्यामि, एतत्=उपर्युक्तं, वः विदितमस्तु=भवद्भिर्ज्ञायताम् ।

एतादृशा प्रचारणे बोधिसत्त्वस्यायमाशयो यल्लोकाः सत्पथमनुवर्तेरन्, अवृष्टिवारणाय यज्ञाय समागृह्णन्तोऽपि मुद्रितमुखा भवेयुरिति हृदयम् ।

( ८९ ) तद्यः कश्चिदितः प्रभृत्यविनयश्लाघानुवृत्त्युद्भवात्
सामन्तक्षितिपार्चितामपि नृपस्याज्ञामवज्ञास्यति ।
स स्वैरेव विषह्य यज्ञपशुतामापादितः कर्मभि-
र्यूपाबद्धतनुर्विषादकृपणः शुष्यन् जनैर्द्रक्ष्यते ॥

प्रसङ्गप्रकाशनपूर्वकं व्याख्यायताम् ।

उत्तरम्—बोधिसत्त्वेन अमर्यादमविनयं चाचरन्तो जना यज्ञपशुत्वेन योजनीया इत्याज्ञायां प्रचार्यमाणायां तत्स्वरूपमेवात्र विशद्यते—तदद्य कश्चिदिति—

इतः प्रभृति=आज्ञाप्रचारणसमनन्तरं, यः कश्चित् अविनयो=विनयवैमुख्यं, श्लाघा=स्वपौरुषाभिमानश्च, तयोरनुवृत्तेः=सम्बन्धस्य, उद्भवात्=अविनयोद्धत्यप्रभावादित्यर्थः सामन्तैः=आश्रयवर्त्तिनृपैः, क्षितिपैः=तथाविधातिरिक्तैश्च राजभिः, अर्चितां=शिरसा धार्यमाणामपि, नृपस्य=बोधिसत्त्वस्य, आज्ञां=पूर्वोक्तलक्षणाम्, अवज्ञास्यति=तिरस्करिष्यति, योऽमर्यादं वर्त्तेत स यज्ञपशुत्वमापाद्येतेति नृपस्याज्ञा सामन्तक्षितिपैरङ्गीकृताऽथ यदि कश्चिदविनयश्लाघासम्बन्धात् तां नाद्रियेत, तदा—स=आज्ञाभञ्जकः, विषह्य=प्रसह्य, हठात्, स्वैरेव कर्मभिः=निजाचरणैरेव, यज्ञपशुताम्=यज्ञीयपशुभावं वध्यत्वम्, आपादितः=गमितः सन्, यूपाबद्धतनुः—यूपे=पशुवधकृते रोपिते काष्ठे, आबद्धतनुः=निगडितशरीरः, विषादकृपणः=दीनतया खिद्यमानः, अत एव शुष्यन्=हीयमानकान्तिः, जनैः द्रक्ष्यते=अवलोकिष्यते ।

आज्ञाभञ्जको यज्ञपशुत्वेन हन्तुं यूपे बध्यमानो लोकैर्द्रक्ष्यते । इति भावः ।

( ९० ) लक्ष्मेव क्षणदाकरस्य विततं गात्रे च कृष्णाजिनं
दीक्षायन्त्रणया निसर्गललिता चेष्टा च मन्दोद्यमा
मूर्ध्नश्छत्रनिभस्य केशरचना शोभा तथैवाद्य च
स्त्यागैस्ते शतयज्वनोऽप्यपहृतः कीर्त्याश्रयो विस्मयः ।

प्रसङ्गस्फुटीकरणपूर्वकं व्याख्यानं विधीयताम् ।

उत्तरम्—वृष्टिर्न भवतीति यज्ञः क्रियतामिति लोकानुरोधे हिंसादोषमाशङ्क्य ततो निवृत्तो बोधिसत्त्वः प्रजानां सत्पथे प्रवर्त्तनाय यज्ञप्रार्थिजनप्रतारणाय चाधर्मप्रवृत्तिः यज्ञपशुः क्रियेतेति स्वमाज्ञां प्राचारयत् । ततश्च सर्वासु प्रजासु धर्मपथानुगासु सतीषु प्रसीदन्नमात्यस्तमनेन श्लोकेन स्तौति—लक्ष्मेवेति—क्षणदा=रात्रिस्तत्करस्य=चन्द्रस्य, गात्रे=वपुषि, विततं=व्याप्तं, लक्ष्म=कलङ्कश्यामिकेव, कृष्णाजिनं=कृष्णमृगचर्म, राजत इति शेषः । दीक्षायन्त्रणया=यज्ञदीक्षानियतत्वेन, निसर्गललिता=स्वभावसुन्दरी, मन्दोद्यमा चेष्टा च, यथा यज्ञदीक्षितो जनः स्वभावेन धीरो जायते तथैवायमपि बोधिसत्त्वः स्वभावधीरो दृश्यत इति द्वितीयपादार्थः । छत्रनिभस्य=छत्राकारस्य, मूर्ध्नः केशरचना शोभा तथैवाद्यास्य मूर्ध्नः केशपाशेन शोभेति भावः । ते=बोधिसत्त्वस्य राज्ञः, शतयज्वनः=इन्द्रस्यापि, कीर्त्याश्रयः=यशोजन्मा, विस्मयः=गर्वः, अपहृतः=अपनीतः । कीर्त्या शक्रोऽपि त्वया जित इति तात्पर्यम् ।

# कतिपय परीक्षोपयोगी प्रश्नोत्तरात्मक ग्रन्थ

साहित्यदर्पणालोकः ( प्रश्नोत्तरात्मकः ) । श्री रामजी लाल शर्मा २०—००
काव्यप्रकाश-रहस्यम् ( प्रश्नोत्तरात्मकः ) । श्री रामजी लाल शर्मा २०—००
चन्द्रालोक-रहस्यम् ( प्रश्नोत्तरात्मकः ) । मानवल्ली तथा वेताल २०—००
शिशुपालवध-रहस्यम् ( प्रश्नोत्तरात्मकः ) १—४ सर्ग । अशोकचन्द्र गौड़ २०—००
सांख्यकारिकादर्शः ( प्रश्नोत्तरात्मकः ) । श्री राजेन्द्रप्रसाद कोठचारी १०—००
अलङ्कारशास्त्रस्येतिहासः (प्रश्नोत्तरात्मकः) । श्रीपरमेश्वरदीन पाण्डेय १०—००
नलचम्पू-रहस्यम्(प्रश्नोत्तरात्मकः)। १-५ उच्छ्वास । परमेश्वरदीनपाण्डेय १२—५०
वेदान्सार-प्रदीपः ( प्रश्नोत्तरात्मकः ) । श्री राजेन्द्रप्रसाद कोठचारी १०—००
मध्यसिद्धान्तकौमुदी-चन्द्रिका ( प्रश्नोत्तरात्मकः ) । विजयमित्र शास्त्री ४०—००
मृच्छकटिक-सोपानम् ( प्रश्नोत्तरात्मकः ) । डॉ० नरेश झा १५—००
वेणीसंहार-रहस्यम् ( प्रश्नोत्तरात्मकः ) । श्री परमेश्वरदीन पाण्डेय १२—५०
नैषध-रहस्यम् ( प्रश्नोत्तरात्मकः ) । १—५ सर्ग । श्री रमाशंकर मिश्र २०—००
दशरूपक-रहस्यम् ( प्रश्नोत्तरात्मकः ) । श्री त्रिलोकीनाथ द्विवेदी १५—००
भट्टिकाव्य-दर्पणः ( प्रश्नोत्तरात्मकः ) । श्री प्रज्ञान भिक्षु । १—४ सर्ग १५—००
५—८ सर्ग १५—००
भट्टिकाव्यलोकः ( प्रश्नोत्तरात्मकः ) । रमाशंकर मिश्र ।१४—१७ सर्ग १५—००
१८—२२सर्ग १५—००
चन्द्रकलानाटिका-रहस्यम् ( प्रश्नोत्तरात्मकः ) । श्री परमेश्वरदीन पाण्डेय ७—५०
संस्कृतसाहित्येतिहासः ( प्रश्नोत्तरात्मकः ) । श्री परमानन्द शास्त्री १२—५०
रसगङ्गाधर-हृदयम् । ( प्रश्नोत्तरात्मकः ) । श्री ज्ञानचन्द्र त्यागी २०—००
लघुसिद्धान्तकौमुदी-चन्द्रिका ( प्रश्नोत्तरात्मकः ) । विजयमित्र शास्त्री २५—००
कादम्बरी-कलाप्रकाशः ( प्रश्नोत्तरात्मकः ) डॉ० नरेश झा २०—००
लघुमञ्जुषारहस्यम् ( प्रश्नोत्तरात्मकः ) । स्वामी रामेश्वर पुरी १०—००
शाकुन्तलरहस्यम् ( प्रश्नोत्तरात्मकः ) । श्री त्रिलोकीनाथ द्विवेदी २०—००
मेघदूत-तत्त्वालोकः ( प्रश्नोत्तरात्मकः ) । डॉ० अशोकचन्द्र गौड़ शास्त्री १२—५०
महाभाष्यनवाह्निकालोचनम् ( प्रश्नोत्तरात्मकः ) । विजयमित्र शास्त्री १६—००
मुक्तावली-प्रकाशः ( न्यायसिद्धान्तमुक्तावली-प्रश्नोत्तरी ) ।
श्री राजेन्द्रप्रसाद कोठचारी २०—००
औचित्यविचारचर्चा-मञ्जरी ( प्रश्नोत्तरात्मकः ) । डॉ० नरेश झा १२—५०
वक्रोक्तिजीवितम् ( प्रश्नोत्तरात्मकः ) । डॉ० नरेश झा ७—५०
भारतीयसंस्कृति-सोपानम् (प्रश्नोत्तरात्मकः) । डॉ० शिवप्रसाद द्विवेदी १२—५०

